विहरणेन निमित्तेन सूर्यस्य श्येनपातवती मृगयाविहारक्रियोत्प्रेक्ष्यत इति क्रियास्वरूपोत्प्रेक्षा तावदेका। तस्माच्छशिनस्त्रासः तस्य दिगन्तरगमनं प्रति हेतुत्वेनोत्प्रेक्ष्यत इति हेतूत्प्रेक्षान्या। ततस्तदधिगमस्तारापारावतानां मुग्धत्वेनाध्यवसितः तत्तत्स्थानेऽस्फुरणं प्रति हेतुत्वेनोत्प्रेक्ष्यत इत्यपरा च हेतूत्प्रेक्षा। सर्वाश्चैता गम्याः। इवाद्यभावात्। एवमन्या अपि स्वयमेव बोध्याः। नूनमादिशब्दविरहेण पूर्वोक्तप्रकाराणामुन्नेतुं शक्यत्वात्। प्रागुदाहृतानामेव श्लोकानां नूनमादिशब्दाविधानेन गम्योत्प्रेक्षोदाहरणत्वसंभवाच्च गम्योत्प्रेक्षाः पृथक्साकल्येन नोदाहृताः।

इदं तु चिन्त्यते। गम्योत्प्रेक्षासु जातिद्रव्यस्वरूपोत्प्रेक्षे संभवतो नवेति। संभवत इति पक्षे—

'रुचयोऽस्तमितस्य भास्वतः स्खलिता यत्र निराश्रयाः खलु।
अनुसायमभुर्विलेपनापणकाश्मीरजपण्यवीथयः॥'

'परिखावलयच्छलेन या न परेषां ग्रहणस्य गोचरः।
फणिभाषितभाष्यफक्किका विषमा कुण्डलनामवापिता॥'

इत्यादिनोदाहरणेन भाव्यम्। अभिमतं च तथा केषांचित्। अलंकारसर्वस्वकारस्य तु न संभवत इति पक्षः। एतदभिप्रायेणैव तेनोक्तं गम्योत्प्रेक्षाविभागे 'प्रायश्चात्र स्वरूपोत्प्रेक्षा न संभवति' इति। फलध्वनयोस्तस्य पक्षेऽलंकारः रूपकमेव। अत एव—

'पीयूषप्रसृतिर्नु या मलभुजां दात्रं तमोल्लूनये
स्वर्गङ्गाविमनस्कफोकवदनस्रस्ता मृणालीलता।
द्विर्भावः स्मरकार्मुकस्य किमपि प्राणेश्वरी सागसामाशातन्तुरुदञ्चति प्रतिपदि प्रालेयभानोस्तनुः॥

इत्यत्र मालारूपकमुदाहरता 'स्वर्गङ्गा विमनस्का' इत्यादिष्वपि रूपकमेवोररीकृतम् । तस्माज्जातिद्रव्योत्प्रेक्षे परिहृत्यैव गम्योत्प्रेक्षावर्गः परिगणनीयः ।

इदं चान्यद्बोद्धव्यम् । धर्म्युत्प्रेक्षासु विषयिविषयानुगतो धर्मो धर्मोत्प्रेक्षासु विषयाश्रयविषयानुगतो धर्मश्च निमित्तम् । तेन 'उवाह या तनुलता' इत्यादौ वैमल्यं निमित्तमित्यादिपक्षो न युक्तः । तस्य तादात्म्यसंभावनोपयुक्तप्रतिबिम्बघटकस्य तनुधर्मस्य विषयधर्मत्वाभावात् । 'यत्रान्यधर्मसंबन्धात्' इत्यादिलक्षणं वदद्भिः सर्वैरपि विषयधर्मस्यैव निमित्तत्वस्य व्यवहृतत्वादित्यलमतिविस्तरेण । अत्र ब्रूमः—

'विषयिण उत्प्रेक्षायां जातिगुणाद्यात्मना विभागविधा ।
यादृशि नैव शोभा तयोपमायामिवोपमेयस्य ॥
तदभावेऽलंकाराः संभवमात्रेण न विभागम् ।
अर्हन्तीतरथास्या विषयोऽप्येवं विभक्तव्यः ॥
धर्मस्यापि विभागो गुणक्रियात्मा न चारुताहेतुः ।
उपमायामिव सोऽपि न्यूनस्तदभावयोरसंकलनात् ॥
मनसि सन्तमिव प्रियमीक्षितुं नयनयोः स्पृहयान्तरुपेतयोः ।
ग्रहणशक्तिरभूद्दमीययोरपि न संमुखवास्तुनि वस्तुनि ॥
वतंसनीलाम्बुरुहेण किं दृशा विलोकमाने विमनीबभूवतुः ।
अपि श्रुती दर्शनसक्तचेतसां न तेन ते शुश्रुवतुर्मृगीदृशाम् ॥
इत्यादिषु पश्यामो गुणक्रियाभावयोरपि व्यक्तम् ।
उज्ज्वलभावनिबन्धनमुत्प्रेक्षायां निमित्तत्वम् ॥'

अत्र आद्ये उदाहरणे नयनयोर्हृदयगतप्रियवीक्षणायान्तःप्रविष्टत्वो-

त्प्रेक्षणायां बाह्यवस्तुग्रहणशक्त्यभावो निमित्तम् । द्वितीये श्रोत्रेन्द्रियगतविलोकनैकाग्रत्वोत्प्रेक्षायां श्रवणक्रियाभावो निमित्तम् । एवम्—

'वीरासनैर्ध्याननुपामृषीणाममी समध्यासितवेदिमध्याः ।
निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि ॥'

इत्यादीन्यभावनिमित्तत्वे भूयांस्युदाहरणानि ।

'अपि च समुच्चयभेदः परिगणनीयो निमित्तेषु ।
भावौ भावाभावौ समुच्चितावपि निमित्ततां भजतः ॥'

'अवैमि हंसावलयो वलक्षास्त्वत्कीर्तिमूर्तेश्चपलाः पुलाकाः ।
उड्डीय युक्तं पतिताः स्रवन्तीवेशन्तपूरं परितः प्लवन्ते ॥'

'उडुपरिषदः किं नार्हन्ती निशः किमनौचिती
पतिरिह न यद्दृष्टस्ताभ्यां गणेयरुचां गणः ।
स्फुटमुडुपतेराश्मं वक्षः स्फुरन्मलिनात्मन-
श्ठविमदनयोर्विच्छेदेऽपि द्रुतं यत न द्रुतम् ॥'

'एवमादिषु बह्वीषु निह्नोतुं केन शक्यते ।
समुच्चितनिमित्तत्वमुत्प्रेक्षासु निरीक्षितम् ॥'

आद्ये उदाहरणे हंसावलीनां कीर्तिपुलाकत्वोत्प्रेक्षायां धावल्यगुणो जलोपरि प्लवनक्रिया चेत्युभयं निमित्तम् । द्वितीये उडुपतिवक्षसोऽश्मविकारत्वोत्प्रेक्षायामश्मच्छविरूपो भावो द्रुतत्वाभावश्चेत्युभयं निमित्तम् । किं च—

'उत्प्रेक्षायां निमित्तत्वं यत्नादिद्रव्ययोरपि ।
तेनापि विकलां विद्वो निमित्तगणनामिमाम् ॥'

---

१. वेशन्तमस्पसरः, तत्पूरयितेति पुस्तक.

'द्रोणः स तत्र वितरिष्यति भाग्यलभ्य-
सौभाग्यकार्मणमयीमुपदां गिरिस्ते ।
तद्दीपदीप इव दीप्तिभिरोषधीनां
चूडामिलज्ज्वलदकज्जलदर्शनीयः ॥'

अत्र द्रोणाचलस्य दीपत्वोत्प्रेक्षायां तत्प्ररूढौषधिवृक्षदीपस्योपरि स्थितं जलदकज्जलं च निमित्तमिति जातेर्निमित्तत्वं दृष्टम् ।

'निशासु मूर्ध्नि स्फुरता यत्सौधो राजतीन्दुना ।
श्रीकण्ठो भक्तरक्षार्थं संनिधानं भजन्निव ॥'

इत्यत्र बाणासुरसौधस्य शिवरूपोत्प्रेक्षायां मूर्ध्नि स्फुरन्निन्दुर्निमित्तम् । एवम्—'भास्वतालंकारेण, श्वेतरोचिषा सितेन, लोहितेनाधरेण, सौम्येन दर्शनेन, गुरुणा नितम्बेन, सितेन हारेण, शनैश्चरेण पादेन, विकचेन लोचनोत्पलेन, त्रिभुवनविजयकेतुना रूपेण, ग्रहमयीने'त्यत्र वासवदत्तायाः सकलग्रहमयत्वोत्प्रेक्षायां श्लेषेण तत्तद्ग्रहरूपापन्नालंकारादयो निमित्तमिति जातिक्रियागुणानां समुच्चितानां निमित्तत्वं दृष्टम् । न चोदाहृतेषु दीप्त्यादिसंबन्धो निमित्तं स च सर्वो गुण एवेति वाच्यम् । तथा सति 'ईदृशां क्षामतां गतौ' इत्यादावपि गमनादिक्रियासंबन्ध एव निमित्तमिति क्रियाया एव निमित्तत्वप्रसङ्गात् । न च तथापि 'भास्वतालंकारेण' इत्यादौ श्लेषेण सूर्यरूपताचापन्ना अलंकारादयो निमित्तं न त्वविशिष्टा जातिर्द्रव्यं वेति वाच्यम् । तथासति 'कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव' इत्यादावपि कपालोन्मुक्ताङ्कुरत्वादिविशिष्टमेवोत्प्रेक्षणीयं न त्वविशिष्टं जात्यादिकमिति विषयिणोऽपि जात्यादिरूपेण विभागस्यासामञ्जस्यप्रसङ्गात् । तस्माद्विषयिण इव निमित्तस्यापि जात्यादिरू-

१. 'द्युतीरिव उर्वी' क-ख. २. 'गुणानां समुच्चितत्वं दृष्टम्' ग.

पेण चतुर्विधतया पुनः प्रत्येकं भावाभावाभ्यामष्टविधतया च विभागः कर्तव्य इति न्यून इवायं विभागः। किं च यद्धेतूत्प्रेक्षायामनुपादानं निमित्तस्य क्वापि न संभवतीति प्रतिश्रुतं तदपि नो चारु।

'मग्ना सुधायां किमु तन्मुखेन्दोर्लग्ना स्थिता तत्कुचयोः किमन्तः।
चिरेण तन्मध्यममुञ्चतास्य दृष्टिः कृशीयःस्खलनाद्भिया नु॥'

'इह हेतावुत्प्रेक्ष्ये मज्जनलगने निमित्तमनुपात्तम्।
तत्कार्यं दृष्टिगतं चिरेण तन्मुखकुचत्यजनम्॥'

स्यादेतत्। इह मज्जनलगनोत्प्रेक्षयोश्चिरेण मुखकुचत्यागावनुपात्तौ निमित्ते, तयोश्च न मज्जनलग्ने हेतुत्वयोग्ये इति। सत्यम्। तथापि हेतूत्प्रेक्षैव। न हि हेतुभवनक्षमस्योत्प्रेक्षैव हेतूत्प्रेक्षा, किं तु हेतुत्वेनोत्प्रेक्षा। यथा—'सैषा स्थली यत्र विचिन्वता त्वाम्' इत्यत्र। अत्र हि पञ्चमी हेतुत्वप्रतिपादिका। तथा—

'कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ॥'

इत्यत्र क्षामतागमनं प्रति परस्परादर्शनस्य हेतुत्वोत्प्रेक्षायां शतृप्रत्ययो हेतुत्वप्रतिपादकः।

'मदनतापभरेण विदीर्य नो यदुदपाति हृदा दमनस्वसुः।
निबिडपीनकुचद्वययन्त्रणा तमपराधमधात्प्रतिबध्नती॥'

इत्यत्र हृदयस्य मदनतापेन स्फुटितस्योत्पतनाभावे कुचद्वययन्त्रणाया हेतुत्वोत्प्रेक्षायामुत्पतनप्रतिबन्धकत्वपरः प्रतिबध्नतीशब्दः फलतोऽनुत्पतनहेतुत्वप्रतिपादकः। एतादृशेषु च फलस्य निमित्तस्योपादानं नियतमेव। अन्यथा पञ्चम्यादीनामन्वयसंघटनाभावात्। यत्र हेतुत्वप्रतिपादकः शब्दो नास्ति तत्र हेतुभवनक्षमस्यापि स्वरूपोत्प्रेक्षैव।

अत एवालंकारसर्वस्वकृता—

'प्राप्याभिषेकमेतस्मिन्प्रतितिष्ठासति द्विषाम् ।
चकम्पे लोक्यमानार्थभयविह्वलितेव भूः ॥'

इत्यत्र विह्वलितत्वस्योत्प्रेक्ष्यस्य हेतुत्वप्रतिपादकशब्दरहितस्य कम्पं प्रति हेतुभवनक्षमत्वेऽपि स्वरूपोत्प्रेक्षोदाहृतेति चेत् । मैवम् ।

एवं हि—

'स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम् ।
च्युतकेसरदूषितेक्षणान्यवतंसोत्पलताडनानि च ॥'

इत्यत्र हेतूत्प्रेक्षा लक्ष्या न स्यात् । स्मरणगतहेतुत्वप्रतिपादकशब्दाभावात् । न चेष्टापत्तिः ।

'कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥'

इत्युक्त्यनन्तरं प्रवृत्तस्यास्य श्लोकस्य, अथ वा मत्पूर्वकृतापराधस्मरणेनैव दर्शनं न दीयते किमिति हेतूत्प्रेक्षापरत्व एव सामञ्जस्यात् । यदि तु हेतुत्वप्रतिपादकशब्दाभावेऽपि पूर्वापरानुगुण्येनापि हेतूत्प्रेक्षा भवेत् तर्हीहापि तृतीयोत्प्रेक्षासमभिव्याहारात्तस्यां चिरेण मध्यत्यजने शब्दोपात्ते स्खलनभयस्यैवाद्योत्प्रेक्षयोरपि निमित्ततया गम्यमाने चिरान्मुखकुचत्यजने मज्जनस्य लगनस्य च हेतुत्वेनोत्प्रेक्षणमित्येव युक्तम् । यत्रापि हि फले फलत्वप्रतिपादकशब्दस्तत्राप्यौचित्येन फलोत्प्रेक्षामवधीर्य हेतूत्प्रेक्षाङ्गीकार्या दृश्यते । यथा—

'हृतस्य यन्मन्त्रयते रहस्त्वां तव्द्यक्तमामन्त्रयते मुखं यत् ।
तद्वैरिपुष्पायुधमित्रचन्द्रसख्यौचिती सा खलु तन्मुखस्य ॥'

---

१. 'वा' क. २. 'इत्युक्त्वानन्तरम्' क.

अत्र हि हृदयकृतरहस्यमन्त्रणोद्भेदनप्रत्ययमर्शेकेन तच्छब्देन सख्यौचितीशब्दस्य कर्मार्थकण्यन्तस्य सामानाधिकरण्याच्छब्दतो रहस्योद्भेदनस्य मुखगतहृदयवैरिमन्मथसुहृच्चन्द्रसख्यकार्यत्वं प्रतीयते। तथापि तत्र सख्यस्य रहस्योद्भेदनं प्रति हेतुत्वेनैवोत्प्रेक्षा, न तु रहस्योद्भेदनस्य सख्यफलत्वेन। रहस्योद्भेदनं फलमुद्दिश्य सख्यं कृतमित्युत्प्रेक्षाया असामञ्जस्यात्। हेतुत्वमात्रेण हेतूत्प्रेक्षाया इव तदुद्देशं विना कार्यत्वमात्रेण फलोत्प्रेक्षाया अनिर्वाहात्। एवं यत्र हेतौ हेतुत्वप्रतिपादकः शब्दस्तत्रापि क्वचिदौचित्येन हेतूत्प्रेक्षामवधीर्य फलोत्प्रेक्षाङ्गीकार्यो दृश्यते। यथा—

'स्मरानुगीभूय विदर्भसुभ्रूवक्षो यदक्षोभि खलु प्रसूनैः।
स्रजं सृजन्त्या तदरीर्नि तेषु यन्त्रैकया सूचिशिखां निखाय॥'

अत्र निखनने पूर्वकालत्वरूपकारणत्वप्रतिपादकक्त्वाप्रत्ययसद्भावेऽपि न तद्वैरशोधनं प्रति हेतुत्वेनोत्प्रेक्ष्यं किं तु वैरशोधनार्थं निखननमिति वैरशोधनमेव फलत्वेनोत्प्रेक्ष्यम्। सिद्धासिद्धयोरपि सिद्धस्योत्प्रेक्षणीयत्वात्। इह तदुद्देशोत्प्रेक्षणसंभवाच्च। यथा वा—

'अस्यैव सर्गाय भवत्करस्य सरोजसृष्टिर्मम हस्तलेखः।
इत्याह धाता हरिणेक्षणायां किं हस्तलेखीकृतया तयास्याम्॥'

अत्र हस्तलेखीकृतया सरोजसृष्टेति करणविभक्तिसद्भावेऽपि न सा विधातृकर्तृकसरोजसृष्टिगतहस्तलेखत्वप्रकाशनं प्रति हेतुत्वेनोत्प्रेक्ष्यते, किं तु तत्प्रकाशनार्थं सरोजसृष्टिर्हस्तलेखकरणमिति तत्प्रकाशनमेव फलत्वेनोत्प्रेक्ष्यम्। किं बहुना यत्र हेतुत्वप्रतिपादकः शब्दस्तस्यैव फलत्वमौचित्येन क्वचिदङ्गीकार्यं दृश्यते। यथा—

'स्तनावालोक्य तन्वङ्ग्याः शिरः कम्पयते युवा।
तयोरन्तरनिर्मग्नां दृष्टिमुत्पाटयन्निव॥'

---

१. हस्तलेखो नाम रुचिरवर्णलेखसिद्धये पूर्वमभ्यासरूपं वर्ण्यमानम्.

अत्र शत्रुर्हेतौ विधानेऽपि फलस्याप्युद्देश्यतया कथंचिद्धेतुत्वमित्युपपाद्य फलोत्प्रेक्षाङ्गीकरणीया । एवं च फलत्वादिप्रतिपादनमप्यनादृत्य हेतूत्प्रेक्षादिकमौचित्येनाङ्गीकार्यं तदा किमु वक्तव्यं विरोधिशब्दाभावे औचित्यानुशरणं कार्यमिति । एवमनया दिशान्यत्रापि निमित्तानुपादानं संभवदूहनीयम् । अपि च—

'यथोपात्तनिमित्तमनुपात्तनिमित्तता ।
प्रत्येकं वर्तते तद्वत्समुच्चित्यापि दृश्यते ॥'

यथा—

'मुनिद्रुमः कोरकितोऽसितद्युतिर्वनेऽमुनामन्यत सिंहिकासुतः ।
तमिस्रपक्षत्रुटिकूटभक्षितं कलाकलापं किल वैधवं वमन् ॥'

अत्र कोरकनिर्गमनविशिष्टस्य मुनिद्रुमस्य विधुकलाकलापवमनविशिष्टराहुरूपत्वे उत्प्रेक्ष्यमाणे विशिष्योत्प्रेक्षानिमित्तमसितवर्णत्वमुपात्तम्, विशेषणोत्प्रेक्षानिमित्तं तु कोरकविधुकलासाधर्म्यादिरूपं नोपात्तम् । यथा वा—

'त्वत्प्राङ्गणे सुन्दर पाण्ड्यदेव मतङ्गजाः शृङ्खलिनो विभान्ति ।
आवासदानादरिभूपतीनामाशान्तशैला इव सापराधाः ॥'

अत्र विशेषणभूतसापराधत्वोत्प्रेक्षानिमित्तं शृङ्खलितत्वमुपात्तम्, विशेष्यशैलरूपत्वोत्प्रेक्षानिमित्तमौन्नत्यादिकं नोपात्तम् । यथा वा—

'अजस्रभूमीतटकुट्टनोत्थितैरुपास्यमानं चरणेषु रेणुभिः ।
रयप्रकर्षाध्ययनार्थमागतैर्जनस्य चेतोभिरिवाणिमाङ्कितैः ॥'

अत्र विशेष्यभूतचेतोरूपत्वोत्प्रेक्षायामणिमाङ्कितैरिति निमित्तमुपात्तम् । अध्ययनार्थमागतैरिति तद्विशेषणोत्प्रेक्षायामपि चरणोपासनारूपं निमित्तमुपात्तम् । रयप्रकर्षेत्यध्ययनविशेषणे निमित्तं चेतसां वर्णनीया-

दश्चादपक्वष्टरयत्वं नोपात्तम्। एवमन्यत्रापि निमित्तोपादानानुपादानसमुच्चये उदाहर्तव्यम्। तस्मान्न्यूनः सतृणाभ्यवहारश्चायं विभागः। अतोऽत्र विषयिणो जात्यादिरूपेणाष्टधाविभागम्, धर्मस्य गुणक्रियारूपेण विभागं चापहाय विभागान्तरलभ्या यावन्तो भेदास्तावन्त एव चमत्कारिणः।

स्वरूपहेतुफलोत्प्रेक्षासु तु विधान्तरेणाप्यवान्तरभेदाः संभवन्ति। यथा—स्वरूपोत्प्रेक्षा द्विविधा, अविशिष्टोत्प्रेक्षा विशिष्टोत्प्रेक्षा च। यत्र विषयिणो विशेषणमुपात्तमपि नोत्प्रेक्षणीयमवगम्यते तद्विषयरूपस्य तन्निमित्तरूपस्य वा विषयविशेषणस्याभावात् किं तु तद्विशेषणं विषयिणि विधान्तरेणोपयुज्यते सात्वविशिष्टोत्प्रेक्षा। यत्र तु विषयिणो विशेषणमप्युत्प्रेक्षणीयमवगम्यते तद्विषयरूपस्य तन्निमित्तरूपस्य वा विषयविशेषणस्योपादानात्सा विशिष्टोत्प्रेक्षा।

तत्राद्या यथा—

'रतेर्गृहीतानुनयेन कामं प्रत्यर्पितस्वाङ्गमिवेश्वरेण।
काकुत्स्थमालोकयतां नृपाणां मनो बभूवेन्दुमतिनिराशम्॥'

अत्र मदनरूपत्वोत्प्रेक्षायां मदनाकृतिशालित्वमस्ति निमित्तम्। अतस्तावदुत्प्रेक्षणीयमवगम्यते तत्प्रत्यर्पणं रत्यनुनयप्रसक्तेन परमेश्वरेण कृतमिति विशेषणांशस्तु नोत्प्रेक्षणीयोऽवगम्यते। तदंशे विषयस्य वाच्यस्य गम्यस्य वा निमित्तस्य चाभावात्। किं तु परमेश्वरदग्धस्य मदनदेहस्यासुरदग्धस्य कचदेहस्य शुक्र इव न कश्चिदन्यः प्रत्यर्पणं कर्तुं शक्नोतीति विषयिणि प्रत्यर्पणोपपादकतया तद्विशेषणमुपयुज्यत इत्यविशिष्टोत्प्रेक्षेयम्।

विशिष्टोत्प्रेक्षायां 'मुनिद्रुमः कोरकितोऽसितद्युतिः' 'त्वत्प्राङ्गणे

सुन्दर पाण्ड्यदेव' इत्याद्युदाहरणे विषयोपादानाद्विषयिविशेषणस्योत्प्रेक्षतावगम्यते । द्वितीये निमित्तोपादाना(हेतु)फलोत्प्रेक्षे त्वसिद्धयोः सिद्धयोर्वा हेतुफलभावेनोत्प्रेक्षणीयतया प्रत्येकं द्विविधे । 'सैषा स्थली यत्र विचिन्वता त्वाम्' 'चोलस्य यद्भीतिपलायितस्य' इत्यादिषु नूपुरकण्टकिद्रुमादावसिद्धयोर्विश्लेषदुःखललाटलिपिदर्शनादिक्रियोर्हेतुफलाभावेनोत्प्रेक्षणीयता ।

'आलोहिततलावेतौ क्षितौ विक्षेपणादिव ।
वर्णयेम कथं तन्व्याः पादौ पल्लवकोमलौ ॥'

'पूरं विधुर्वर्धयितुं पयोधेः शङ्केयमेणाङ्कमणिं कियन्ति ।
पयांसि दोग्धि प्रियविप्रयोगात्सशोककोकीनयने कियन्ति ॥'

इत्यादिषु पादचन्द्रादौ स्वतःसिद्धयोरेव विक्षेपपयोवर्धनादिक्रियोर्हेतुफलाभावेनोत्प्रेक्षणीयता । प्रकारान्तरेणापि कतिचिदस्या भेदान्समासोक्तिप्रकरणे दर्शयिष्यामः ।

यत्तु सर्वस्वकृता वैचित्र्यान्तरमस्या दर्शितम् । 'एषा क्वचिद्धर्मविषये श्लिष्टा, क्वचिच्छलादिशब्देन सापह्नवा, क्वचित्पदार्थान्वयवेलायां सादृश्याभिधानादुपमाक्रान्ताप्युपमावाक्यार्थतात्पर्यसामर्थ्यादभिमातृ[1]व्यापारौचित्यक्रमेणोत्प्रेक्षायां पर्यवस्यतीत्युपमोपक्रमा चेति' तत्र धर्मविषये श्लिष्टत्वं किमित्युपन्यस्तम् । किं धर्मस्य निमित्तानुगामितयेव श्लेषेणापि निर्वाहित इति, किं वा धर्मांशेषु शुद्धतेव श्लेषेणालंकृतापि दृश्यत इति । आद्ये उपमायां साधारणधर्मस्यानुगामित्वादयो यावन्तो भेदाः साधारण्यनिर्वाहकास्ते सर्वेऽप्युत्प्रेक्षायां धर्मस्य निमित्ततानिर्वाहकाः संभवन्तीति

---

१. 'अभिमन्तृ' ख-ग.

न्यूनो विभागः। तथा हि 'बालेन्दुवक्राण्यविकाशभावात्' इत्यादौ तावदनुगामित्वं स्पष्टम्। तथा—

'व्यराजत सखे तन्व्या वक्त्रं वलितकन्धरम्।
लावण्यौघजलावृत्तनालदण्डमिवाम्बुजम्॥'

इत्यत्र वस्तुप्रतिवस्तुभावः। बिम्बप्रतिबिम्बभावादयस्तु प्रागेवोदाहृताः। द्वितीये निमित्तांशेन श्लेषेण चालंकारान्तरेणाप्यलंकृतता दृश्यते इति न्यूनो विभागः। तथा हि 'अङ्गुलीभिरिव केशसंचयम्' इति निमित्तांशे उपमालंकारः स्पष्टः।

'उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किल।
धृततच्चतुरङ्गुलीव यद्वलिभिर्भाति सहेमकाञ्चिभिः॥'

इत्यत्रोत्प्रेक्षा। अत्र दमयन्त्युदरस्य केनचित्कुतुकिना परिमीयमाणत्वोत्प्रेक्षायां काञ्चीसहितासु वलीषु तदीयाङ्गुलित्वोत्प्रेक्षारूपमुदरगतं तदीयाङ्गुलिचतुष्टयधारणं निमित्तम्।

'अजस्रमारोहसि दूरदीर्घां संकल्पसोपानततिं तदीयाम्।
श्वासान्स वर्षत्यधिकं पुनर्यद्ध्यानात्तव त्वन्मयतामवाप्य॥'

इत्यत्रासंगतिः। यतोऽत्र नलस्य दमयन्तीरूपतायास्तूत्प्रेक्षायां दमयन्तीकर्तृकेण सोपानारोहणेन नलस्य श्वासवर्षणं निमित्तम्।

'प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता।
अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत॥'

इत्यत्र विरोधाभासः। अत्र हि विरुद्धधर्मगतत्याश्रयभेदकत्वत्यागोत्प्रेक्षायां विरुद्धतयावभासमानधर्माणां नले सत्त्वासो निमित्तम्।

---

१ 'अपेल' ख.

'ध्रुवमधीतवतीयमधीरता दयितदूतपतद्गतिवेगतः।
धृतिविरोधकरीं द्व्यणुकोदरी तदुदितः स हि यो यदनन्तरः॥'
इत्यत्रार्थान्तरन्यासः। यद्यप्यत्र दमयन्तीगतस्य चापलस्य नलदूतहंसपक्षवेगो हेतुत्वेनोत्प्रेक्ष्यते, तथापि तत्रोत्प्रेक्षायामध्ययनफलमात्रं न निमित्तं किं त्वन्यवेगात्कथमन्यत्र चापलमिति शङ्कावारणाय निबद्धेन 'तदुदितः स हि यो यदनन्तर.' इत्यर्थान्तरन्यासेनोपस्कृतम्। एवम्—

'गौरीव पत्या सुभगा कदाचित्कर्तेयमप्यर्धतनूसमस्याम्।
इतीव मध्ये विदधे विधाता रोमावलीमेचकसूत्रमस्याम्॥'
इत्यत्र निमित्तांशे रूपकमित्याद्यूहनीयम्। तस्मादुभयथापि तत्र श्लिष्टत्वमात्रकीर्तनं न्यूनमितरेषामप्युपलक्षण द्रष्टव्यम्।

यत्तु सापह्नवत्वे—

'गतासु तीरं तिमिघट्टनेन ससम्भ्रमं पौरविलासिनीषु।
यत्रोल्लसत्फेनलवच्छलेन मुक्ताट्टहासेव विभाति शिप्रा॥'
इति स्वरूपोत्प्रेक्षायामुदाहृतं तदपि हेतुफलोत्प्रेक्षयोरपि सापह्नवत्वे उपलक्षणं बोद्धव्यम्। तत्र सापह्नवहेतूत्प्रेक्षायाम्—

'मुग्ध. स मोहात्सुभगात्तदेहाद्दद्भवद्भ्रूरचनाय चापम्।
भ्रूभङ्गजेयस्तव मन्मनोभूरनेन रूपेण यदा तदासीत्॥'
अत्र मदनगते मुग्धशब्दवाच्यत्वे वस्तुतोऽहेतो' सौन्दर्यस्य हेतुत्वमपह्नुत्य नलभ्रूरचनाय स्वचापादानप्रयुक्तस्य मौढ्यस्य हेतुत्वमुत्प्रेक्षितम्। सापह्नवफलोत्प्रेक्षा यथा—

'रवितप्तो गजः पद्मास्तद्बन्धून्बाधितुं ध्रुवम्।
सरो विशति न स्नातुं गजस्नानं हि निष्फलम्॥'
अत्र गजस्य सरःप्रवेशं प्रति वस्तुतः फलस्य स्नानस्य फलत्वमपह्नुत्य

पक्षबाधनमत्र फलत्वेनोत्प्रेक्षितम्। न च स्वरूपोत्प्रेक्षाया वास्तवविषयस्वरूपापह्नव एव विच्छित्तिविशेषो न तु फलोत्प्रेक्षयोः प्रसिद्धहेतुफलापह्नव इत्यस्ति। प्रस्तुतोदाहृतयोर्हेतुफलोत्प्रेक्षयोः सिद्धहेतुफलापह्नवोऽपि सहेतुकः न तूदाहृतविषयः स्वरूपापह्नवोत्प्रेक्षे इत्युपलक्षणतैव युक्ता। अन्यदत्र विचारणीयं समासोक्तिप्रकरणे विचारयिष्यते।

यत्तु 'कस्तूरीतिलकन्ति भालफलके' इत्यादावुपक्रान्ता उपमा औचित्यादुत्प्रेक्षायां पर्यवस्यतीत्युक्तं तत्र भालादिस्थानविशेषसंबन्धस्य कस्तूरीतिलकादितादात्म्यमात्रे औचित्यं चेत् रूपके पर्यवसानं स्यादिति तस्य तादात्म्यसंभावनायामौचित्यमुपगम्योत्प्रेक्षायां पर्यवसानं वाच्यम्। तथा च—

'रक्षन्तु त्वामसितजलजैरञ्जलिः पादमूले
मीना नाभीसरसि हृदये कौस्तुभाख्या मुरारेः।
हाराः कण्ठे हरिमणिमया वक्त्रपद्मे द्विरेफाः
पिच्छाचूडाश्चिकुरनिकरे घोषयोषित्कटाक्षाः॥'

इत्यादौ रूपकप्रतीतिस्थलेऽप्युत्प्रेक्षोपगन्तव्या। तथा—

'पतत्रिणा तद्रुचिरेण वञ्चितं श्रियः प्रयान्त्याः प्रविहाय पल्वलम्।
चलत्पदाम्भोरुहनूपुरोपमा चुकूज कूले कलहंसमण्डली॥'
'लोकोत्तरो मण्डपमादिदेशि...खण्डमाभात्यनुशायमस्य।'[२]
'अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा॥'

इत्यादावुपमाप्रतीतिस्थले यथोत्प्रेक्षायां पर्यवसानम्। एवम्—

'वरणः कनकस्य मानिनीं दिवमङ्कादमरापगागताम्।
भ्रमरस्य चाटपङ्क्तिः परिरभ्यानुनयन्नुवास मा॥'

---

१. 'मारस्य मुरारे.' ग. २. सर्वेषु पुस्तकेषु श्लोकार्धं एव दृश्यते.

'स्वधाकृतं यत्तनयैः पितृभ्यः श्रद्धापवित्रं तिलमिश्रमम्भः ।
चन्द्रं पितृस्थानतयोपतस्थे तदङ्गरोचिःखचिता सुधेव ॥'

इत्यादिरूपकप्रतीतिस्थलेऽपि तस्यां पर्यवसानमुपगन्तव्यम् । तादात्म्यसंभावनोपयुक्तविशेषणनिबन्धरूपन्यायसाम्यात् । एवम्—

'पूर्णेन्दोः परिपोषकान्तवपुषः स्फारप्रभाभासुरं
नेदं मण्डलमभ्युपैति गगनाभोगाज्जिगीषोर्जगत् ।
कामस्योच्छ्रितमातपत्रमधुना पाण्डुप्रदोषश्रिया
मानोन्नद्धजनाभिमानदलनोद्योगैकहेवाकिनः ॥'

इत्यपह्नुत्युदाहरणे इत्यपि द्रष्टव्यम् । अधिकं निदर्शनालंकारप्रकरणे चिन्तयिष्यते ।

ननु गम्योत्प्रेक्षाया अलंकारतया परिगणनमयुक्तम् । तस्या अलंकार्यध्वनित्वात् । उच्यते । विषयविषयिनिमित्तप्रसक्तेषु केवलमिवादिवाचकाप्रयोगमात्रेण यत्रोत्प्रेक्षावगम्यते सात्यन्तं स्फुटत्वाद्वाच्यायमानत्वादलंकारतामेवासादयतीति । यथोदाहृतम् । यत्रोत्प्रेक्षणीयस्य विषयिणोऽप्यनुपादानं निबद्धेन वस्तुनालंकारेण वा गम्योत्प्रेक्षा गूढा तत्रैवोत्प्रेक्षाध्वनिः । यथा—

'वीररुद्रभटान्दृष्ट्वा जयलक्ष्म्यावृतान्रणे ।
कर्षन्त्यरिवधूकेशान्कानने कण्टकिद्रुमाः ॥'

अत्र वस्तुना कचग्रहणरूपेण जयश्रीसमालिङ्गितभटदर्शनोद्दीपितमन्मथा इवेत्युत्प्रेक्षा ध्वन्यते ।

---

१. 'प्रविशेषकान्तवपुषः' ग. २. 'मानोन्नद्धजना' ख. ३. 'हेलोद्यतम्' क. ४. ख-पुस्तकेऽत्रैव 'इत्युत्प्रेक्षाप्रकरणम् । समाप्तश्चायं समुदायमालो ग्रन्थः.' इति ग्रन्थसमाप्तिः दृश्य. ग पुस्तके तु 'अप्पय्यदीक्षितचित्रमीमांसा' अयं समाप्तिश्लोकोऽत्र लिखित्वा पुनरपि अतिशयोक्त्यादि लिखितमस्ति. ५. 'केवल इव' ग.

'वेलामतिक्रम्य पृथुमुखेन्दोरालोकपीयूषरसेन तस्याः।
। नलस्य रागाम्बुनिधौ विवृद्धे तुङ्गौ कुचावाश्रयति स दृष्टिः॥'
अत्रैकदेशविवर्तिरूपके मज्जनभयादिवेत्युत्प्रेक्षावगम्यते। एवमन्यन्न्याप्युदाहार्यम्।

इत्युत्प्रेक्षाप्रकरणम्।

---

अथातिशयोक्तिः—

तस्यास्तावत्—

**विषयस्यानुपादानाद्विषय्युपनिबध्यते।**
**यत्र सातिशयोक्तिः स्यात्कविप्रौढोक्तिजीविता॥**

इति लक्षणमुक्त्वा चातुर्विध्यं वर्णयन्ति। भेदेऽभेदः, अभेदे भेदः, संबन्धेऽसंबन्धः, असंबन्धे संबन्ध इति। एतेषामुदाहरणानि—

'कमलमनम्भसि कमले कुवलयमेतानि कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्॥'

'अन्येयं रूपसंपत्तिरन्या वैदग्ध्यधोरणी।
नैषा कमलपत्राक्षी सृष्टिः साधारणी विधेः॥'

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं स विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥'

'दाहोऽम्भः प्रसृतिंपचः प्रचयवान्बाष्पः प्रणालोचितः
श्वासाः प्रेङ्खितदीप्रदीपकलिकाः पाण्डिम्नि मग्नं वपुः।

---

१. 'अस्या.' क. २. 'कुवलयमेतानि' ग.

किं चान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥'

अत्र कमलादीनां मुखादिभेदेऽप्यभेदः । रूपादीनां लोकसिद्धरूपाद्यभेदेऽपि भेदः । रूपस्य पुराणप्रजापतिसृष्टिसंबन्धेऽप्यसंबन्धः । विरहादीनामम्भःप्रसृतिपचत्वाद्यसंबन्धेऽपि संबन्धश्च क्रमेण निबद्धः । अत्रेदं विचार्यते । विषयस्यानुपादानादित्यत्र किमनुपादानं सर्वथैव विषयस्य प्रतिपादकाभावः, तद्वाचकाभावो वा । आद्ये 'कमलमनम्भसि' इत्यादावपि लक्षणं न स्यात् । कमलादिशब्दानां लक्षणया विषयभूतमुखादिप्रतिपादकत्वात् । द्वितीये 'चुम्बतीव रजनीमुखं शशी' इत्यादिषु मुखशब्दादिश्लेषमूलातिशयोक्तावव्याप्तिः । विषयिवाचकातिरिक्तविषयप्रतिपादकाभावो विवक्षित इति चेत्, तथापि 'उन्मीलितानि नेत्राणि पद्मानीवोदिते रवौ' इत्यादावुन्मीलितशब्दवाच्यलक्ष्यार्थाध्यवसायरूपातिशयोक्तावव्याप्तिः । तत्रोन्मीलितशब्दस्य विषयीभूतविकासलक्षकतया तद्वाचकातिरिक्तस्यैव विषयप्रतिपादकत्वात् । विषयिप्रतिपादकातिरिक्तविषयप्रतिपादकाभावनिवेशायामपि—

'पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर ।
भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते ॥'

इत्यत्र कर्णशब्दश्लेषमूलातिशयोक्तावव्याप्तिः । तत्र विषयविषयिणोः पृथक्कर्णपदोपादानाद्विषयप्रतिपादकविलक्षणविषयप्रतिपादकाभावो वा विवक्षित इति चेत्, तथापि—

'उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयस्कृतेन किम् ।
त्रपासरिद्दुर्गमपि प्रतीर्य सा नलस्य तन्वी हृदयं विवेश यत् ॥'

इत्यत्र कुचद्वये कुम्भयुगाभेदाध्यवसायरूपातिशयोक्तावव्याप्तिः ।

तत्रोरःप्रभवत्वाकारेण विषयप्रतिपादकस्य विषयिप्रतिपादकविलक्षणस्य सद्भावात् । ननु विषयिप्रतिपादकविलक्षणस्य विषयतावच्छेदकप्रकारेण विषयप्रतिपादकस्याभावो विवक्षितः, उरःप्रभवत्वं तु न पयोधरयोर्विषयतावच्छेदकमनेकसाधारणत्वादिति चेत्, एवमपि—

'ध्वान्तस्य वामोरु विचारणायां वैशेषिकं चारु मतं मतं मे ।
औलूकमाहुः खलु दर्शनं यत्क्षमं तमस्तत्त्वनिरूपणाय ॥'

इत्यादावुलूकदर्शनमिति वैशेषिकमते पक्षिविशेषदृष्टभेदाध्यवसायरूपातिशयोक्तावव्याप्तिर्दुर्वारा । तत्र वैशेषिकमतमिति विषयतावच्छेदकप्रकारेण विषयप्रतिपादकस्य संभवात् । अपि चैवम् 'रामरावणयोर्युद्धम्' इत्यनन्वयालंकारे चातिव्याप्तिः । तत्र विषयिप्रतिपादकविलक्षणविषयप्रतिपादकाभावात् । ननु यत्र कश्चिदभेदेनाध्यवसीयते स विषयः, यस्तु तथाध्यवसीयते स विषयीति विषयविषयिभावोऽत्र विवक्षित इति नोक्तातिव्याप्तिरिति चेत्, एवमपि 'विद्वन्मानसहंस' इत्यादिश्लिष्टरूपकेऽतिव्याप्तिर्दुर्वारा । रूपके ताद्रूप्यारोपमात्रम्, अतिशयोक्तावभेदाध्यवसाय इति कल्पना तु रूपकविचारलक्षण एव निरस्ता । सारूप्यनिबन्धनसमासोक्त्युदाहरणेषु चातिव्याप्तिः ।

'अप्पय्यदीक्षितचित्रमीमांसा न मुदे कस्य मांसला ।
अनूरुरिव घर्मांशोरर्धेन्दुरिव धूर्जटेः ॥'

समाप्तश्चायं समुपलभ्यमानो ग्रन्थः ।

---

१. क-पुस्तके 'इति चेत्' इति नास्ति. २. 'निरीक्षणायाम्' क. ३. 'दुर्वारा । तत्र' इति क-पुस्तके नास्ति. ४. 'सद्भावात्' क. ५. 'अप्रस्तुतप्रशंसोदाहरणेषु' ग.

पण्डितराजश्रीजगन्नाथविरचितं

# चित्रमीमांसाखण्डनम् ।

नागेशकृतमर्मप्रकाशादुद्धृतया टिप्पण्या सहितम् ।

नामं नामं घनश्यामं धाम तामरसेक्षणम् ।
पण्डितेन्द्रो जगन्नाथशर्मा निर्माति कौतुकम् ॥
रसगङ्गाधरे चित्रमीमांसाया मयोदिताः ।
ये दोषास्तेऽत्र संक्षिप्य कथ्यन्ते विदुषां मुदे ॥

सूक्ष्मं विभाव्य मयका समुदीरिताना-
मप्पय्यदीक्षितकृताविह दूषणानाम् ।
निर्मत्सरो यदि समुद्धरणं विदध्या-
दस्याहमुज्ज्वलमतेश्चरणौ वहामि ॥

यत्त्वादिमागे चित्रमीमांसायामप्पयदीक्षितैः 'निःशेषच्युतचन्दनं स्तनतटम्' इति पद्यं ध्वन्युदाहरणप्रसङ्गे व्याख्यातम्—'उत्तरीयकर्षणेन चन्दनच्युतिरित्यन्यथासिद्धिपरिहाराय निःशेषग्रहणम् । ततश्चन्दनच्युतेः

---

व्याख्यातमिति । व्याख्यानमेवाह—उत्तरीयेत्यादिपाठसन्तीत्यन्तेन इत्यादीत्यादिना प्राप्तवर्णनं कालविलम्बेन [illegible]न्यथासिद्धिपरिहाराय इत्यन्तमिति । अलमित्यादरोऽर्थः । एतेन कालान्यथासिद्धिनिरासः । पुनः

1. 'पदा'.

स्नानसाधारण्यव्यावर्तनेन संभोगचिह्नोद्घाटनाय तटग्रहणम्। स्नाने हि सर्वत्र चन्दनच्युतिः स्यात्, तत्र तु स्तनयोस्तट उपरिभाग एव दृश्यते। इयमाश्लेषकृतैव। तथा निर्मृष्टरागोऽधर इत्यत्र ताम्बूलग्रहणविलम्बात्प्राचीनरागस्य किंचिन्मृष्टतेत्यन्यथासिद्धिपरिहाराय निर्मृष्ट इति रागस्य निःशेषमृष्टतोक्ता। पुनः स्नानसाधारण्यव्यावर्तनेन संभोगचिह्नोद्घाटनायाधर इति विशिष्य ग्रहणम्। उत्तरोष्ठे सरागेऽधरोष्ठमात्रस्य निर्मृष्टगता चुम्बनकृतैव' इत्यादिना 'इदमपि ध्वनेरुदाहरणम्' इत्यन्तेन संदर्भेण तटादिघटिता वाक्यार्थाः 'स्नानव्यावृत्तिद्वारा संभोगाङ्गानामाश्लेषचुम्बनादीनां प्रतिपादनेन प्रधानव्यङ्ग्यव्यञ्जने साहायकमाचरन्ति' इति, तदेतदालंकारिकाणामतिलमां हृदयारुंतुदतया नालंकारमीमांसकेन वक्तुं युक्तम्। एवं च तटादिघटितानां वाक्यार्थानां मुख्यार्थवापीस्नानपक्षे बाधितत्वाद्विरोधिलक्षणया वापीं स्नातुं न गतासि किं तु तदन्तिकमिति प्रतिपत्तौ विगलितव्यञ्जनाव्यापारेण यथा—'अहो पूर्णं सरो यत्र लुठन्तः स्नान्ति मानवाः' इत्यत्र लुठन्त इत्यस्य विशेषणस्य मुख्येऽर्थेऽनुपपत्त्या विरुद्धोऽर्थो भासमानोऽपि न व्यङ्ग्यः, एवमिहापि स्यात्।

अपि च यथाकथंचिदङ्गीकुरु चात्र व्यञ्जनाव्यापारं तथापि न तवेष्टसिद्धिः। वाच्यानां निःशेषच्युतचन्दनस्तनतटत्वादीनामधमत्वस्य च त्वदुक्तरीत्या प्रकारान्तरेणानुपपद्यमानतया दूतीसंभोगमात्रनिष्पाद्यत्वेन

---

स्नानसाधारण्यव्यावर्जे(र्त)नेन संभोगचिह्नोद्घाटनाय दूरे आन्त इति हृदयस्थितोऽर्थः। कालतः स्नानेन सर्वतोऽञ्जनलोकः स्यात्तत्र तु लोचनयोः क्वचित्प्रान्त एवानञ्जनत्वमिदं चुम्बनकृतमेवेत्यादि परिग्रहः। वाक्यार्थाः प्रधानवाक्यार्थाः। प्रधानव्यङ्ग्यं संभोगः। यथाकथंचिदिति। अर्थापत्तिप्रमाणस्यातिरिक्तस्याभावादिति भावः। अभ्र रमणे। संभोगमात्रेति। तदन्येन याच्यसिद्धेरेवा-

गुणीभूतव्यङ्ग्यत्वप्रसङ्गात् । किं चैवं सति 'भम धम्मिअ वीसत्थ—' इत्यादौ लिङ्गलिङ्गिज्ञानरूपेणानुमानेन व्यक्तिं गतार्थयतो व्यक्तिविवेककृतो मतं प्रत्याचक्षाणा व्यभिचारित्वेनासिद्धत्वेन च संदिह्यमानादपि लिङ्गाद्व्यञ्जनमभ्युपगच्छन्तः सर्वेऽपि ध्वनिमार्गप्रवर्तकास्तव प्रतिकूलाः स्युः । अन्यच्च येनोदाहृतं पद्यमायुष्मता व्याख्यातम्, तस्यापि विशेषणानामसाधारण्यमननुमतमेव । तथा च तेनैवोक्तं पञ्चमोल्लासशेषे—'निःशेषेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि भवन्ति । यतश्चात्रैव स्नानकार्यत्वेनोपात्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि' इति । एवं च त्व(त)दुक्तिविरोधः स्फुट एव । तस्माद्वाच्यार्थसाधारण्यमेवोचितमतिविदग्धनायिकानिरूपितानां विशेषणानाम् । तथा हि—अयि बान्धवजनस्याज्ञातपीडागमे स्वार्थपरायणे स्नानकालातिक्रमभयवशेन नदीमदीयप्रियघोरन्तिकमगत्वैव

---

भावादिति भावः । भमेति । 'भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन । गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥' कुसुमावचयार्थं कुञ्जे धार्मिकभ्रमणेन खण्डितसंकेतायास्तन्निवारणोक्तिरियम् । अत्र वाच्येन भीदस्याभावस्य गृहे श्वनिवृत्त्या भ्रमणेन निकुञ्जे सिंहोपलब्ध्या भ्रमणनिषेधो व्यङ्ग्यः । ग्रन्थविरोधमाह—अन्यच्च येनेत्यादि । गमकतयेति । संभोगेत्यादिः । अत्रैव निःशेषेत्यादावेव । प्रतिबद्धानि अन्यतया न तत्रैव संबद्धानि । अनैकान्तिकानि साधारणानि । कथं तर्हि तस्य व्यङ्ग्यत्वं प्रकाराद्युपलभ्य आह—तस्माद्वाच्यार्थेति । वापीस्नानेनेत्यर्थः । निरूपितेति । बोधितेत्यर्थः । गमे इत्यन्तव्याख्यास्यार्थेति । अन्तिकमित्यत्र गत्वाशीलत्वनुबद्धः । एवं त्रयाणामपरस्यात् । तथा निर्मृष्टरागः । तन्वीत्यस्यार्थमाह—तानयाचेति । इत्यादायेत्यर्थः । उपसंहरति—

---

१. 'भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिदो तेण । गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥'.

वापीं स्नातमितो ममान्तिकाद्गतासि न पुनस्तस्य परवेदनानभिज्ञतया दुःखदातृत्वेनाधमस्यान्तिकम्। यतो निःशेषच्युतचन्दनं स्तनयोस्तटमेव नोरःस्थलम्। वापीगतबहुलयुवजनत्रपापारवश्यादंशद्वयलग्नाग्रस्वस्तिकीकृतभुजलतायुगलेन तटस्यैवोत्ततया मुहुरामर्शात्। एवं त्वरया सम्यगक्षालनेनोत्तरोष्ठो न निर्मृष्टरागोऽधरस्तु तदपेक्षया गण्डूषजलरदनशोधनाङ्गुल्यादीनामधिकसंमर्दमावहतीति तथा। किं च सम्यगक्षालनेन नेत्रे जलमात्रसंसर्गाद्दूरमुपरिभाग एवानञ्जने। शीतवशाचानवाच्च तव तनुः पुलकितेति। एवं तस्या विदग्धाया गूढतात्पर्योक्तिरुचिता। अन्यथा वैदग्ध्यभङ्गापत्तेः।

एवं साधारणेषु वाक्यार्थेषु मुख्यार्थे बाधाभावात्तात्पर्यार्थस्य झटित्यनाकलनात्कुतोऽत्र लक्षणावकाशोऽनन्तरं च वाच्यार्थप्रतिपत्तेर्वक्तृबोद्धव्यनायकादीना वैशिष्ट्यप्रतिपत्तौ सत्यामधमपदेन स्वप्रवृत्तिप्रयोजको दुःखदातृत्वरूपो धर्मः साधारणात्मा प्राग्वाच्यार्थदशायामपराधान्तरनिमित्तकदुःखदातृत्वरूपेण स्थितो व्यञ्जनाव्यापारेण दूतीसंभोगनिमित्तकदुःखदातृत्वाकारेण पर्यवस्यतीत्यालंकारिकसिद्धान्तनिष्कर्षः। एतेन 'अधमत्वमप्रकृष्टत्वं तच्च जात्या कर्मणा वा भवति। तत्र जात्यापकर्षे नोच-

---

**एवमिति**। उक्तप्रकारेत्यर्थः। **मुख्यार्थे** वापीस्नाने। **अनन्तरमिति**। वाच्यार्थप्रतिपत्तेरनन्तरं चेत्यर्थः। **वक्त्री** विदग्धोत्तमनायिका। **बोद्धव्या** दुःशीला दूती। **नायकस्तादृशः**। आदिना काक्वादिपरिग्रहः। **अधमपदेनेति**। बोधित इति शेषः। **स्वेति**। अधमपदप्रवृत्तिनिमित्तमित्यर्थः। **साधारणेति**। तादृशकर्मान्तर-

---

१. 'स्वप्रवृत्तिनिमित्तप्रयोजकः' इति.

मनायिका नायकस्य वक्ति । नापि स्वापराधपर्यवसायिदूतीसंभोगादिहीनकर्मातिरिक्तेन कर्मणा । तादृशं च दूतीसंप्रेषणात्प्राचीनं सोढमेवेति नोद्घाटनार्हमितीतरव्यावृत्त्या संभोगरूपमेव पर्यवस्यति' इति यदुक्तम्, तदपि निरस्तम् । विदग्धोत्तमनायिकायाः सखीसमक्षं तदुपभोगरूपस्य स्वनायकापराधस्य स्फुटं प्रकाशयितुमतितमामनौचित्येन प्राचीनानामेव सोढानामप्यपराधानामसह्यतया दूतीं प्रति प्रतिपादयिषितत्वात् । यथैव हि—

'औण्णिद्दं दोव्वल्लं चिन्ता अलसत्तणं सणीससिअम् ।
मह मन्दभाइणीए केरं सहि तुह वि परभवइ ॥'

इत्यादावौन्निद्र्यादीनि वाच्यभूतस्वक्लेशनिमित्तकसखीक्लेशसाधारणान्येव बोद्धव्यवैशिष्ट्यवशात्तत्कामुकोपभोगजनितौन्निद्र्यादिषु पर्यवस्यन्ति । न चात्र वाच्यार्थव्यावर्तकं किंचिद्विशेषणमपेक्षन्ते सहृदयाः, एवमिहापि । अथ तदन्तिकगमनस्य लक्षणावेद्यत्वेऽपि रमणमात्रस्य लक्ष्यशक्तिमूलव्यञ्जनवेद्यत्वमव्याहतमेवेति चेत्, नैवम् । 'अधमत्वं जात्या कर्मान्तरेण वा नोत्तमनायिका नायकस्य वक्ति' इत्यादिना संदर्भेण रमणस्यापि भवतैव श्रुतार्थापत्तिवेद्यतायाः स्फुटं वचनात् । एतेन काव्यप्रकाशटीकाकृतामुक्तयः परास्ताः । विशेषणसाधारण्यपरस्य स्वमूलग्रन्थस्यैव तैरनाकलनात् । बाधाभावेन लक्षणाया दूरापास्तत्वात् ।

---

साधारणेत्यर्थः । स्वापराधेति । स्वं नायिका दूतीसंभोगादिरूपं यद्दीनकर्मेत्यर्थः । एतेनेतरस्यार्थमाह—विदग्धेति । तदुपभोगेति । दूत्युपभोगेत्यर्थः । अतितमामत्यन्तम् । प्राचीति । दूतीसंप्रेषणादित्यादिः । अन्यथा वैदग्ध्यादिभङ्गापत्तिः । औण्णिद्दमिति । 'औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम् । मम मन्दभागिन्याः कृते सखि त्वामपि परिभवति ॥' कृतप्रियतमसंभोगां दूतीं प्रत्युपभोगचिह्नैस्तां जानती नायिकाया इयमुक्तिः । साधारणानि । दोषादिनोऽपि

यत्तु—

'प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेण वा
किमुत सकले याते वाह्नि प्रिय त्वमिहैष्यसि।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः सबाष्पगलज्जलैः॥'

इत्यत्र 'सकलमहः परमावधिस्ततः परं प्राणान्धारयितुं न शक्नोमीति व्यङ्ग्यं प्रियगमननिवारणरूपवाच्यसिद्ध्यङ्गम्' इति मध्यमकाव्योदाहृति-प्रसङ्गे निगदितम्, तच्चिन्त्यम्। सबाष्पगलज्जलानां 'प्रहरविरतौ' इत्याद्यालापानामेव प्रियगमननिवारणरूपवाच्यसिद्ध्यङ्गव्यङ्ग्यतया व्यङ्ग्यस्य गुणीभावाभावात्। आलापैरिति तृतीयया प्रकृत्यर्थस्य हरणक्रियाकरणतायाः स्फुटं प्रतीतेः। न च व्यङ्ग्यस्यापि वाच्यसिद्ध्यङ्गतात्र संभवतीति तथोक्तमिति वाच्यम्। 'निःशेषच्युतचन्दनम्' इत्यादावप्यधमत्वरूप-वाच्यसिद्ध्यङ्गतया दूतीसंभोगादौ सत्त्वाद्गुणीभूतव्यङ्ग्यत्वापत्तेः। अस्तु वा ततः परं प्राणान्धारयितुं न शक्नोमीति वाच्यसिद्ध्यङ्गतया गुणीभाव-स्तथापि नायकादेर्विभावस्य बाष्पादेरनुभावस्य चिन्तावेगादेश्च संचारिणः संयोगादभिव्यज्यमानेन विप्रलम्भेन ध्वनित्वं को निवारयेत्।

---

तत्संभवात्। यथात्रैव नायिकायास्तद्वियोगत । प्रहरविरताविति। हे प्रिय, त्वं किं प्रहरसमाप्तौ दिनमध्ये यावे वा मध्याह्नादपि परेण तृतीयप्रहरेण यातेन वा सर्वदिने गते वेह मत्समीपे उत निश्चयेनैष्यस्यागमिष्यसि। इत्येवंप्रकारेण।' आलापेऽस्यान्वय.। अग्रे स्पष्टम्। शतशब्दोऽनियतसंख्यावाची। एवमुक्तव्यव-च्छेदे। व्यङ्ग्यस्य शक्नोमीत्यन्तस्य। ननु विनिगमनाविरहोऽत आह—आला-पैरिति। प्रकृत्यर्थस्य तादृशालापस्य। अपिरुक्तसमुच्चये। ननु सबाष्पगलज्ज-लतदुक्तालापानां गमनोत्तरचिरकालावस्थितिनिवारकतयाप्युपपत्तेर्व्यङ्ग्यसहिताना-मेव गमननिवारणसामर्थ्यमत आह—अस्तु वेति। आन्तरालिकव्यङ्ग्यमादा-

यदप्युभयचित्रप्रस्ताव उदाजहुः—

'वराहः कल्याणं वितरतु स वः कल्पविरमे
विनिर्धुन्वन्नौदन्वतमुदकमुर्वीमुदवहत् ।
खुराघातत्रुट्यत्कुलशिखरिकूटप्रविलुठ-
च्छिलाकोटिस्फोटस्फुटघटितमाङ्गल्यपटहः ॥'

एतच्च पद्यं दोषाविलत्वादनुदाहार्यमेव । तथा हि—प्रथमेऽर्धे वाक्यद्वयस्यापि समाप्तैर्नैराकाङ्क्ष्यादुत्तरार्धगतविशेषणे समाप्तपुनरात्तत्वम् । निवृत्ते उद्वाहे माङ्गल्यपटहवादनप्रतिपत्तेरपदस्थपदत्वम् । ऊर्ध्ववहननिष्पत्तौ च भूम्यूर्ध्वगानां कुलशिखरिणां कूटेषु कथंकारमधःस्थस्य भगवतो वराहस्य खुराघात इति व्याहतार्थत्वम् । एकार्थेऽनेकक्रियत्वेन यत्पदाध्याहारेण चासंघुलत्वं चेति । अन्येऽप्येवंजातीयका बहवोऽत्र दोषाः । न ह्यवरं काव्यमिति दोषसहस्रमस्तमुदाह्रियते । तस्य काव्यत्वेव नेत्यालंकारिकसिद्धान्तात् । अयमपि कवेः सहृदयस्य च महान्दोषो यत्पुनरिदमेव पद्यं पूर्वोत्तरार्धव्यत्यासेन न पद्यान्तरतामापितम् । एवमप्येकार्थगतेनानेकक्रियत्वेन यत्पदाध्याहारेण चासंघुलत्वाचमत्कारापकर्षः स्थित एव ॥

इति श्रीमद्भट्टारकपेरुभट्टात्मजेन पण्डितराजापराभिधानेन जगन्नाथभट्टेन निर्मिते चित्रमीमांसाखण्डने ग्रन्थारम्भप्रकरणदोषः ।

---

अथोपमाप्रकरणदोषाः—

यत्तु 'सुरस्य पुरतश्चन्द्रो निष्प्रभः' इति वाक्यमुपमाया विपुला-

---

देव ध्वनिगुणीभूतादिव्यवहारस्योपपद्यमानतया 'विप्रलम्भेन ध्वनित्वं को निवारयेत्' इति चिन्त्यम् । अन्यथा 'मामतरनम्' इत्यादिगुणीभूतव्यङ्ग्यप्रपञ्च-

लंकारवर्तितां प्रतिपादयद्भिः प्रायुज्यत, तद्व्याकरणाविमर्शनिबन्धनम्। पुरत इति नगरवाचिनः पुरशब्दात्तसिलि मुखस्य नगरादित्यर्थस्यासंगत्यापत्तेः। न हि पूर्ववाचकः पुरशब्दः क्वापि श्रूयते। पूर्वशब्दात्तु 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इत्यसौ पुरादेशे च पुर इति भाव्यम्। न तु पुरत इति। अत एव 'अमुं पुरः पश्यसि देवदारुम्' इति प्रायुङ्क्त महाकविः। एवमेव च—

> 'रूपयौवनलावण्यस्पृहणीयतराकृतिः।
> पुरतो हरिणाक्षीणामेष पुष्पायुधीयति॥'

इति वाचकोपमेयलुप्तोदाहरणमपि तैर्निर्मितमपशब्दकलुषितमेव। तथा चाहुर्वैयाकरणाः—'पत्या पुरतः परतः,'[१] 'आत्मीयं चरणं दधाति पुरतः,' 'पुरतः सुदती समागतं माम्' इत्यादयः सर्वेऽपि व्याकरणाज्ञानमूला अपशब्दाः इति।

---

शाद्युक्तोदाहरणानामप्यसंपत्त्यापत्तौ व्याकुली स्यात्। तत्रापि व्यङ्ग्यसंकेतभङ्गेन वाच्यमुखमालिन्यातिशयरूपानुभावमुखेनैव विप्रलम्भाभासपोषणं न केवलेन संकेतभङ्गेन। तस्याकर्तव्यत्वबुद्ध्यापि संभवादिति बोध्यम्। तसिलीति। इदं चिन्त्यम्। तदप्राप्तेः। आद्यादित्वात्तसिलावित्युचितम्। महाकविः कालिदासः। तैः अप्पयदीक्षितैः। इदं चिन्त्यम्। पुरत इति निपातात्तीकारात्। अत एव 'इयं च तेऽन्या पुरतो विडम्बना' इति कालिदासः, 'पश्यामि तामित इतः पुरतश्च पश्चात्' इति भवभूतिश्च संगच्छते। इति केचित्। अन्ये तु—'दक्षिणोत्तराभ्यामतसुच्' इत्यत्र तसुचैव पुंवद्भावेन सिद्धेऽतसुज्विधानमन्यस्मादपीति ज्ञापनाय। तेन पश्चायजन्तात्पुरशब्दात्तसिलिष्टसिद्धिः—इत्याहुः॥ वस्तुतस्तु—'पुर अग्रगमने' इति चौरादिकाण्णिजभावे 'इगुपधलक्षणे के सार्वत्रिकस्तसिः।' इति बोध्यम्। वैयाकरण इति। प्राच इत्यादिः।

---

१. 'पत्या पुरतः सरता'.

यदपि चोपमालक्षणसिद्धान्तः—'उपमितिक्रियानिष्पत्तिमत्सादृश्य-वर्णनमदुष्टमव्यङ्ग्यमुपमालंकारः', 'सनिषेधापर्यवसायि सादृश्यवर्णनं वा तथाभूतं तथा' इति लक्षणद्वयं तैरेव निर्मितम्, तदसत् । वर्णनस्य विलक्षणशब्दात्मकस्य, विलक्षणज्ञानात्मकस्य वा शब्दवाच्यताविरहेणोपमाया वाच्यालंकारता न स्यात् । तस्य सर्वथैवाव्यङ्ग्यत्वादव्यङ्ग्यत्व-विशेषणवैयर्थ्याच्च । अथ यदि वर्णनविषयीभूतं तादृशसादृश्यमुपमेत्युच्यते तदा यथा गौस्तथा गवय इत्यत्रोपमालंकारापत्तेः । एवं 'कालोपसर्जने च तुल्यम्' इत्यादावपि । अशिष्यत्वादिना प्रधानप्रत्ययार्थवचन-सादृश्यस्य तत्रापि प्रतिपादनात् । न चात्र वचनभेदस्य दोषस्य सत्त्वाद्-दुष्टत्वविशेषणेनैव वारणं भविष्यतीति वाच्यम् । एतद्वाक्योपप्लुतवाक्यान्तरप्रतिपादितै(कै)कोपमेयके सादृश्ये तथाप्यतिप्रसङ्गात् । न चात्रोपमितिक्रियानिष्पत्तावपि न सादृश्यवर्णनम्, विषयस्याचमत्कारित्वात्, चमत्कारिविषयककविव्यापारस्यैव वर्णनपदार्थत्वादिति वाच्यम् । एवं हि चमत्कारित्वस्य लक्षणेऽवश्यं निवेश्यत्वेनोपमितिक्रियानिष्पत्तिविशेषणस्य वैयर्थ्यात् । नह्यनिष्पन्नमापाततः प्रतीयमानं सादृश्यं चमत्कृतिमाधत्ते । एवं द्वितीयलक्षणे निषेधपर्यवसायित्वं निरर्थकम् । व्यतिरेके

---

विलक्षणशब्देति । शब्दस्य वाच्यत्वमते नायं दोषोऽत आह—विलक्षणज्ञानेति । अव्यङ्ग्यत्वात् व्यञ्जकत्वाभावात् । तादृशेति । अदुष्टाव्यङ्ग्यविशेषणद्वयान्यतरेत्यर्थः । इत्यादावपीति । उपमालंकारापत्तिरित्यस्यानुषङ्गः । आदिभाष्यं चिन्त्यम् । तत्रापि कालोपसर्जनयोरपि । अत्र 'कालोपसर्जने च तुल्यम्' इत्यत्र द्विवचनोपादानादिति भावः । एतदर्थमेव द्वितीयदोषोक्तिः । उपप्लुतेति । कल्पितेत्यर्थः । प्रधानप्रत्ययार्थवचनवत्त्वस्य इत्यादीति भावः । तदाह—एकोपमेयेति । अत्रेति । यथा गौरित्यादावित्यर्थः । व्यतिरेक इति । तथान्-

---

१. 'प्रतिपत्तिनाश्रितैव'.

'तवाननस्य तुलनां दधातु जलजं कथम्' इत्यादौ कमलादिसादृश्यनिषेधस्य, अ[न]न्वये च सर्वथा सादृश्यनिषेधस्य चमत्कारितया तत्प्रतिपत्तये प्रतियोगिविधया सादृश्यनिरूपणमित्यलंकारिकैरभिधानात्।

किं च—

'स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः।
शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः॥'

इत्यादौ मुख्यवाक्यार्थत्वेनानलंकारभूतायामुपमायामतिव्याप्तिः। उपमितिक्रियानिष्पत्तिमत्सादृश्यवर्णनस्य [अदुष्टाव्यङ्ग्यत्वस्य च] अत्रापि सत्त्वात्। नह्यत्राभेदप्रधानोत्प्रेक्षा शक्या वक्तुम्। कल्पितोपमाया निर्विषयत्वापत्तेः। न चेयमुपमा लक्ष्यैवेति वाच्यम्। ध्वन्यमानोपमानिवारणप्रयासस्य वैयर्थ्यापत्तेः।

'व्यापार उपमानाख्यो भवेद्यदि विवक्षितः।
क्रियानिष्पत्तिपर्यन्तमुपमालंकृतिस्तु सा॥'

इति स्वकृतसूत्रेऽलंकारभूतोपमाया एव लक्ष्यत्वेनाभिधानस्य, अलंकारभूतोपमालक्षणत्वे तदेवादुष्टाव्यङ्ग्यत्वविशेषितमिति तत्रैव पुनरभिधानस्य चासंगत्यापत्तेश्च। नह्यत्रोपमानोपमेयसादृश्यादुपमास्वरूपादस्ति कश्चिदतिरिक्तो वाक्यार्थः, येनोपमा तमलंकुर्यात्। अपि च लक्षणे सादृश्य-

---

नस्येत्यादावित्यर्थः। कमलादिसादृश्येति। कमलादिनिष्ठसादृश्येत्यर्थः। ननु वर्णनपदस्य चमत्कारजनकज्ञानविषयीभूतानुयोगिकत्वार्थे तात्पर्यग्राहकमिदम्, न तु लक्षणशरीरपदत्वमिति चेत्, तत्राह—किं चेति। वाक्यार्थत्वेनेति। तथा च न वाक्यार्थोपस्कारकत्वमिति भावः। तदाह—अनलमिति। नन्वलंकारोक्तौ ति योगबोधितोपस्कारकत्वस्यालंकारसामान्यलक्षणत्वेन विशेषलक्षणेषु तदनिवेशेऽपि क्षतमाय इत्यत आह—अपि चेति। अत एव भिन्नभूतोपमालक्षणं

विशेषणं निरर्थकम् । 'उपमितिक्रियानिष्पत्तिमद्वर्णनमुपमा' इत्येतावतैव स्वाभीष्टार्थलाभात् । अन्यच्चाव्यङ्ग्यत्वविशेषणमयुक्तम् । नहि व्यङ्ग्यत्वा-लंकारत्वयोरस्ति कश्चिद्विरोधः । प्राधान्येन व्यङ्ग्यतायां तु प्रधानत्वा-लंकारत्वयोर्विरोधादलंकारत्वलक्षणं तत्र मा प्रसाङ्क्षीदित्युपस्कारकत्वेन पुनर्विशेषणीयम्, न त्वव्यङ्ग्यत्वेन ।

'अद्वितीयं रुचात्मानं मत्वा किं चन्द्र दृप्यसि ।
भूमण्डलमिदं मूढ केन वा विनिभालितम् ॥'

इत्यत्र कस्यचिद्विदेशस्थस्य किरणैरात्मानं तापयन्तं चन्द्रं प्रति वाक्ये अस्ति मम प्रियायाः कदापि बहिरनिर्गतायाः अत एव त्वयाप्यदृष्टाया आननं त्वत्सदृशमिति व्यङ्ग्यतायामुपमाया मूढपदध्वन्यमानचन्द्रविषयवक्तृ-गतासूयालंकारभूतायामव्याप्तेः । विशिष्टोपमादिस्थले च विशेषणाद्युप-मानां वाच्यसिद्ध्यङ्गतया गुणीभूतव्यङ्ग्यत्वम्, सिद्धार्थस्योपस्करणाभावात्तु नालंकारतेति मम न काप्यसंगतिः ।

यदपि काव्यप्रकाशोक्तोपमाभेदाधिकभेदकथनप्रस्तावेऽभिहितम्— 'धर्मलुप्ता वाक्यसमासतद्धितेषु दर्शिता । द्विर्भावेऽपि दृश्यते । 'पटुपटु-र्देवदत्तः' इत्यत्र 'प्रकारे गुणवचनस्य' इति सादृश्ये द्विर्भावविधानात् इति, तत्तुच्छम् । अत्र चोपमावाचकस्याप्यनुपादानाद्वाचकधर्मलुप्ताया-मेतदाधिक्यमुद्भावयितुमुचितम् । न तु धर्मलुप्तायाम् ।

---

त्विति संबोधनम् । पूर्वपदस्यापि तात्पर्यभाक्त्वप्रतिपादनमपि चिन्त्यम् । अव्यङ्ग्यत्वं च तल्लक्षणे प्राधान्येनाव्यङ्ग्यत्वं बोध्यमिति दिक् । विनिभालितमिति । विशेषेण दृष्टमित्यर्थः । अत्रेति । व्यङ्ग्यतायामित्यनन्तरमन्वयः । व्यङ्ग्यतायामुपमाया-मिति । अत्रोपमानस्योपमेयतावच्छेदकत्वप्रतीत्यैव व्यङ्ग्यत्वम् । मूढपदस्वार-स्यात् । चमत्कारातिशयाय । किं इत्यादीनामेतत्सारस्यापेक्षित्वं केचित् । मम चेति ।

धर्ममात्रलुप्तायाश्चान्तर्भावात्पृथगुपादानमसंगतमेव स्यात्। न चात्र द्विर्भावस्यैव वाचकस्य सत्त्वान्नास्ति तस्य लोपः अपि तु धर्ममात्रस्येति वक्तुं शक्यम्। द्विर्भावस्य सादृश्यवाचकत्वोक्तेर्भाष्यकैयटादिविरुद्धत्वात्। तदुक्तम्—'प्रकारे गुणवचनस्य' इति सूत्रे सिद्धं त्विति प्रतीकमादाय कैयटेन 'द्विर्वचनस्य प्रकृतिः स्थानी' इति तदर्थो विशिष्यते न तु प्रकारः। तत्र सर्वस्य गुणवचनत्वाद्व्यभिचाराभावात्। तद्ग्रहणाद्गुणवचनो यः शब्दो निर्ज्ञातस्तस्य सादृश्ये द्योत्ये द्वे भवत इति सूत्रार्थः इति। एवं च द्विर्भावपदस्य सादृश्यद्योतकत्वमेव न वाचकत्वम्, अतो वाचकलोपोऽप्यत्रास्तीति वाचकधर्मलुप्ताया उदाहरणमेतत्, न धर्मलुप्तायाः। यदि तु द्योतकोऽपि वाचकपदेनात्र विवक्षित इत्याग्रहः तदा तुष्यतु भवान्।

यच्चान्यदभ्यधीयत तस्मिन्नेव प्रसङ्गे—

"नृणां यं सेवमानानां संसारोऽप्यपवर्गति।
तं जगत्यभजन्मर्त्यश्रद्धा चन्द्रकलाधरम्॥"

अत्र "क्यङ्क्विपोर्लोपे प्रत्येकं वाचकधर्मलोप उभयत्रापि" इति तदर-

---

चो ह्यर्थे। सूत्रार्थ इति। द्विर्भावस्य सादृश्यद्योतकत्वेऽपि शक्यस्वरूपवाचकत्वाभावाद्वाचकलोप इति तव हृदयम्। तन्नु इवादेर्द्योतकतानये चन्द्र इव मुखमित्यत्र, चन्द्रसुहृन्मुखमित्यत्र च वाचकत्वाव्यवहाराभावाय सादृश्यतद्विशिष्टान्यतरबोधकाभावस्यैव वाचकलुप्ताव्यवहारप्रयोजकत्वस्य वाच्यत्वेन द्योतकस्यापि बोधकत्वानपायेन नास्ति वाचकलोप इति तदाशयादबोधमूलकमिति चिन्त्यमिदम्। यच्चान्यदिति। वक्ष्यमाणमन्यच्चेत्यर्थः। क्विब्लोपे तयोर्धेर्मुखत्वेऽपि

मणीयमेव। चञ्चेत्यत्र कनो वाचकस्य 'लुम्मनुप्ये' इति शास्त्रेण लोपेऽपि. तं चन्द्रकलाधरमभजन्निति चन्द्रकलाधरभजनराहित्यरूपस्य चञ्चाचन्द्रसाधारणस्य धर्मस्योक्तत्वात्कथं तावद्धर्मलोपः। न चोपमेयमर्त्यविशेषणतयोपात्तस्य चन्द्रकलाधरभजनराहित्यस्य सादृश्योपसर्जने चञ्चायामनन्वयान्न सादृश्यमिति वाच्यम्।

'यद्भक्तानां सुखमयः संसारोऽप्यपवर्गति।
तं शंभुमभजन्मर्त्यश्चञ्चेवात्महिताकृतेः॥'

इति पाठे 'धर्मश्रवणमप्युभयत्रापि संभवति' इति स्वोक्तेरसंगत्यापत्तेः। इहाप्युपमेयसंसारविशेषणतयोपात्तस्य सुखमयत्वस्य सादृश्योपसर्जनेऽपवर्गेऽन्वयाभावात्कथंकारं धर्मस्य साधारण्यम्।

उपमेयगतत्वेनोपमानगतत्वेन वा उपात्तस्य धर्मस्य शाब्दे उभयान्वये सत्यपि वस्तुत उभयनिष्ठताज्ञानमेव साधारणतया नियामकमिति चेत्, चन्द्रकलाधरभजनराहित्येऽपि दीयतामेवमेव दृष्टिः। यदि चोपमेयतावच्छेदकतयैव चन्द्रकलाधरभजनराहित्यं मम विवक्षितम्, साधारणधर्मश्च स्वात्महिताकरणरूपः स चात्र लुप्त एवेति शपथेन स्वाभिप्रायः प्रकाश्यते तदा निवारितोऽयं दोषः। तुष्यतु भवान्।

यद्यपि "सेयमुपमा संक्षेपतस्त्रिधा—क्वचित्स्ववैचित्र्यमात्रविश्रान्ता। यथा—'स च्छिन्नमूलः क्षतजेन रेणुः' इत्यादौ। क्वचिदुक्तार्थोपपादनपरा। यथा—'अनन्तरत्नप्रभवस्य' इत्यादौ" इति तैरेव द्रविडशिरो-

---

कन्लोपेऽप्युक्तत्वमित्याह—कन इति। तामुपपादयति—इहापीति। कथंकारं कथं कृत्वा। पाठान्तरवादी समाधत्ते—उपमेयेति। एवमेवेति। एवं च तुल्यत्वेति भावः। प्रकारान्तरेण समाधानमाह—यदि चेति। तैरेवेति।

---

१. 'साधारणतानियामकम्'. २. मुद्रितपुस्तकेषु तु 'पुनरेवम्' इत्युपलभ्यते.

मणिभिरभ्यधीयत। तदप्यहृद्यमेव। 'देवतुल्यैर्नरैर्भाति स देशः सुमनोहरः' इत्यादौ वाच्यभूतवस्तूपस्कारिकाया देवोपमाया अक्रोडीकरणात्। नह्यत्र स्ववैचित्र्यमात्रे विश्रान्तिरस्ति गुणानां प्रधानसांनिध्ये स्वातन्त्र्यायोगात्। नापि व्यङ्ग्योपकारकत्वमेवालंकाराणामिति नियमोऽस्ति। अलंकारभूतोपमासु स्ववैचित्र्यमात्रविश्रान्ताया उपमाया असंग्रहे को नाम ध्वन्यमानायास्तस्या निरासायाव्यङ्ग्यत्वविशेषणदानदुराग्रहः। असंग्रहे तु तत्रैवालंकारभूतोपमालक्षणस्यातिव्याप्तिरिति प्रागेवावेदनात्। अहो महदेवेदमन्याय्यम्—यदलक्षणीयायाश्च स्ववैचित्र्यमात्रविश्रान्ताया उपमायाः संग्रहः, लक्षणीयायाश्च प्रागुक्तायास्त्वलंकारभूताया असंग्रह इति प्राचां तूपमासामान्यं लक्षयतां ध्वन्यमानाया इव वाच्याया अपि स्ववैचित्र्यमात्रविश्रान्तायाः संग्रहो नानुचितः। न तु स्वस्य यत्नेन ध्वन्यमानोपमां निरस्य कण्ठरवेणालंकारभूतोपमालक्षकस्य। यदि च प्रबन्धव्यङ्ग्योपस्कारकत्वेनेयं संगृह्यत इत्युच्यते, तदा 'स्ववैचित्र्यमात्रविश्रान्ता' इति स्वोक्तिर्विरुद्धा स्यात्। 'अनन्तरत्नप्रभवस्य' इत्यत्र गुणसमूहसमा-

---

अप्पयदीक्षितैरेवेत्यर्थः। स्वस्येति। तवेत्यर्थः। नानुचित इत्यस्यानुषङ्गः। इयं स्ववैचित्र्यमात्रविश्रान्ता। विरुद्धा स्यादिति। वस्तुतस्तु—उपमासामान्यलक्षणस्यापि प्रकृतत्वेनोपमासामान्यस्यैवायं विभागः। उपमानोपमेयतावच्छेदकयोर्भेदाच्चास्त्येवोपमितिविनिष्पत्तिः। अत एव 'सेयमुपमा' इत्येवोक्तम्। नत्वलंकार इति। 'नयने शिशिरीकरोतु मे शरदिन्दुप्रतिमं मुखं तव' इत्यत्र तूक्तार्थोपपादनपरैव मुखकर्तृकनयनकर्मकशिशिरीकरणस्यैव कल्प्युक्तस्येन्दूपमयैवोपपत्तेः। उक्तार्थोपपादनेत्यस्य चोक्तार्थस्योपपादनम्, उक्तार्थे चोपपादनमित्यर्थद्वयम्। विनिगमनाविरहात्। इति न दोष इति चिन्त्यमिदमिति बोध्यम्॥ उक्तार्थोपपादनपरोपमायास्त्वदुक्तमुदाहरणं दूषयति—अनन्तेति। 'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्। एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणे-

नाधिकरणे एको दोषो दोषत्वेन न स्फुरतीत्यस्यार्थस्य पूर्वार्धप्रतिपादितार्थसमर्थनात्मकस्य सामान्यात्मकस्य विशेषरूपोदाहरणप्रदर्शनमन्तरेण सम्यगनाकलनादिन्दुकिरणसमानाधिकरणेऽङ्के उदाहृतः, न तूपमानतया निर्दिष्टः । सामान्याद्विशेषस्य भेदाभावेनोपमितिक्रियाया अनिष्पत्त्या उपमालंकृतेरत्रानवतारादुदाहरणालंकारोऽयमतिरिक्तः । यथा 'इको यणचि' इति वाक्यार्थस्य सामान्यात्मनो विज्ञानायोकारे यकारो दध्युदकेकारस्येवेति वाक्यान्तरेण तद्विशेष उदाह्रियते, तद्वदत्रापीति । विशेषस्तूदाहरणालंकारप्रकरणे रसगङ्गाधरादवसेयः ।

यत्तु 'लुप्तायां बिम्बप्रतिबिम्बादयो नैव भेदाः । तस्यां साधारणधर्मस्यानुगामितानियमात्' इत्युक्तम्, तन्न ।

'मलय इव जगति पाण्डुर्वल्मीकसमो नृपोऽम्बिकातनयः ।
जम्बूनदीव कुन्ती गान्धारी सा हलाहलेव सरित् ॥'

इत्यत्रानुगामिधर्मस्याप्रत्ययाच्चन्दनानां पाण्डवानाम्, सर्पाणां दुर्योधनादीनां च बिम्बप्रतिबिम्बभावस्यैवोपमानिर्वाहकत्वात् । न च श्रौतोपादानमन्तरेण नास्ति बिम्बप्रतिबिम्बभाव इति वाच्यम् । आर्थबिम्बप्रतिबिम्बने तदनपेक्षणात् । अत एवाप्रस्तुतप्रशंसायां वाच्यव्यङ्ग्यवाक्यार्थावयवानां बिम्बनमभ्युपगतम् ॥

इति श्रीमद्भट्टारकपेरुभट्टात्मजेन पण्डितराजापराभिधानेन जगन्नाथभट्टेन
निर्मिते चित्रमीमांसाखण्डने उपमाप्रकरणदोषाः ।

---

धिकारः ॥' इत्यन्वेत्यर्थः । स्फुरतीत्यस्यार्थस्य तृतीयचरणप्रतिपाद्यस्य । तत्त्वनानिर्दिष्टत्वे हेतुमाह—सामान्येति । अनवतारादिति । अत्रे तथा चेति शेषः । अलंकारोऽयमतिरिक्त इति । 'अवश्य भारतो मा भूरयां त्वं भारतो भव' इत्यभिनवधर्मिभेदेनाप्युपमानवाक्यभेदस्योपमेयवाक्यभेदस्य भेदेनोप-

१. 'सामान्यकस्य'. २. 'करणेन्दुके'.

अथोपमेयोपमाप्रकरणदोषाः—

यत्तु प्राचीनलक्षणमव्याप्त्यादिभिर्दूषयित्वा

'अन्योन्येनोपमा बोध्या व्यक्त्या वृत्त्यन्तरेण वा ।
एकधर्माश्रया या स्यात्सोपमेयोपमा मता ॥'

इति स्वयं लक्षणं निरमीयत । अस्यार्थः सपदकृत्यः संक्षेपेण तदुक्तरीत्या सहृदयानां सौकर्यायोच्यते—अन्योन्येनेति । अन्योन्यप्रतियोगिकत्वविशिष्टा **व्यक्त्या** व्यञ्जनाव्यापारेण **वृत्त्यन्तरेण** शक्त्या वा **बोध्या** वेद्या, **एकधर्माश्रया** एकधर्मप्रयोज्या या उपमा सा उपमेयोपमा मतेत्यन्वयः ।

अन्योन्येनेति विशेषणादिदं तच्च समिमित्युभयविश्रान्तोपमाया निरासः । अत्रान्योन्यप्रतियोगिकत्वस्य व्यञ्जनव्यापारगम्यत्वेनोपमायाश्च शक्तिवेद्यतया परस्परनिरपेक्षेणैकेन व्यापारेणान्योन्यप्रतियोगिकत्वविशिष्टायास्तस्या अबोधनात् । परस्परनैरपेक्ष्यस्य लक्षणे वाकारेणाभिधानात् । एकधर्माश्रयेति विशेषणात् ।

---

मितिक्रियानिष्पत्तेरुपमालंकारव्यवहारस्य च सर्वसंमतत्वेन तद्वदिहापि सामान्यधर्मविशेषधर्मयोस्तयोर्भेदेन तन्निष्पत्तेः संभवादुदाहरणालंकारो भास्वद्विरिक्त इति तदाशयात् । चिन्त्यमेतत् । 'उदकोदकारे दर्वीकारस्य यः' इति पाठः ॥

**प्राचीनेति** । 'उपमानोपमेयत्वं द्वयोः पर्यायतो यदि । उपमेयोपमा सा स्याद्विविधैषा प्रकीर्तिता ॥' इत्यर्थः । **अव्यासीति** । 'तद्वल्गुना युगपदुन्मिषितेन तावत्' इत्यत्राव्याप्तिः । 'रजोभिः स्यन्दनोद्धूतैः' इत्यत्रातिव्याप्तिरिति भावः । तृतीयार्थः प्रतियोगित्वमित्याशयेनाह—**अन्योन्यप्रतीति** । लक्षणाया असंभवादाह—**शक्त्येति** । इवादिसत्त्वे इति भावः । **विश्रान्तेति** । उभयत्र पर्यवसिता न श्रौती तस्यामित्यर्थः । **शक्तीति** । सप्तंपदे(?)त्यादिः । ननु मिथो निरपेक्षत्वं न निविष्टमत आह—**परस्परेति** । अन्यथा पक्षान्तरकथनासंगते-

१. 'व्यञ्जनाव्यापारमात्रवेद्यत्वेन'. २. 'शक्तिबोध्यतया'.

'रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः ।
भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥'[1]

इत्यत्र परस्परोपमायां नातिव्याप्तिः । तत्रोपमाप्रयोजकधर्मैक्याभावात् । भूतलोपमानिकायां प्रयोजकस्य रजसामनुगामिधर्मस्य, नभस्तलोपमानिकायां प्रयोजकस्य घनसदृशगजानां बिम्बप्रतिबिम्बभावापन्नधर्मस्य च भेदात् । व्यक्त्येति च विशेषणं व्यङ्ग्योपमेयोपमासंग्रहार्थमितीदमुपमेयोपमात्वप्रयोजकं लक्षणमिति, तन्न ।

'अहं लतायाः सदृशीत्यखर्वं गौराङ्गि खेदं न कदापि यायाः ।
गवेषणेनालमिहापरेषामेषापि तुल्या नितरां भवत्याः ॥'

अत्र 'षष्ठ्यन्तात्सदृशादयः शब्दाः सादृश्यप्रतियोगिवचनाः'[2] इत्युक्तदयान्योन्यप्रतियोगिकत्वविशिष्टाया उपमायास्तुल्यादिरूपैकधर्माश्रयाया वृत्त्यन्तरेण शक्त्या बोधनादुपमेयोपमात्वापत्तेः । न चात्रान्योन्यप्रतियोगिकत्वमुपमायां न प्रतीयते । लतादिसंनिभसादृश्याश्रयत्वस्यैवास-

---

रिति भावः । रजसामिति । प्रयोजकीभूतरजोनिष्ठानुगामिधर्मस्येत्यर्थः । घनानविभक्तिकत्वस्येव समानवचनत्वस्याभेदान्वये न तन्त्रत्वमिति भावः । एवमग्रेऽपि । घनगजयोर्भेदेन साधारणत्वं कथमत आह—बिम्बेति । प्रयोजकमिति । अनुगतानतिप्रसक्तलक्षणमात्रं तु—'सदृशस्य तृतीयस्य व्यवच्छेदाय यद्वयोः । अन्योन्येनोपमेयत्वमुपमेयोपमा मता ॥' इति द्रष्टव्यम् । अत्रान्योन्येनेति विशेषणम् 'अहमेव गुरुः सुदारुणानाम्' इति प्रतीपविशेषव्यावृत्त्यर्थमिति भावः । अहमिति । लतानुयोगिकसादृश्याश्रयत्ववदहमित्यर्थः । अखर्वं महान्तम् । एषापीति । त्वदनुयोगिकसादृश्यप्रतियोगिनीत्यर्थः । अनेनास्य इत्यादिः । तनुत्वेनास्य अनुपात्तेत्यादिः । लतादीति । भवदनुयोगिकसादृश्यप्रतियोगिकत्वस्यैवेत्यर्थः । एतेन सादृश्यव्यवच्छेदः । सादृश्यादिपदानां धर्मिपरत्वात् । एवं च

---

१. रसगङ्गाधरे तत्र 'रजोभिर्भूरिव दीर्घनखनिर्भैरैश्च द्यौरिव भूरिति भस्त्वित्यर्थस्तार्थे परस्परोपमायां नातिव्याप्तिः.' इति पाठः. २ 'तव सादृश्य' इति रसगङ्गाधरे पाठः.

स्पदार्थेऽन्वयादिति वाच्यम्। 'मुखस्य सदृशश्चन्द्रश्चन्द्रस्य सदृशं मुखम्' इत्युपमेयोपमायामव्याप्तेः। नहि 'अहं लतायाः सदृशीत्यखर्वम्' इत्यत्रोपमेयोपमा भवितुमर्हति। गर्वमात्रनिरासपरत्वेनोत्तरार्धगतोपमायास्तृतीयसदृशव्यवच्छेदाप्रतिपत्तेः। अत एव अन्यान्यपि तव सदृशानि सन्त्येव तेषां गवेषणेन किं फलमित्येवदर्थकं गवेषणेनेत्युत्तरार्धं संगच्छते। 'तृतीयसब्रह्मचारिव्यवच्छेदो ह्युपमेयोपमाजीवितम्' इत्यालंकारिकसिद्धान्तात्। अन्यथा 'रजोभिः स्यन्दनोद्धूतैः' इति प्रागुक्तपरस्परोपमावारणप्रयासवैफल्यप्रसङ्गात्। न च तृतीयसदृशव्यवच्छेदफलकत्वमुपमाविशेषणमिति वाच्यम्। विशेषणान्तरवैयर्थ्यापत्तेः। तद्विशेषणव्यावर्त्यानामाधुनिकविशेषणेनैव वारणात्। अन्योन्यप्रतियोगिकत्व-

---

सादृश्यस्य तत्रान्वये इयम्, न तु तत्रेति भावः। मुखस्येति। तत्रापि सदृशपदसत्त्वेन तत्तुल्ययोगक्षेमत्वादिति भावः। नन्वेवं तथा दुर्वचमिति यथेतरसंग्रहस्तथाह—लताया इति। अस्यापि संग्रह इष्ट एवेत्यतिव्याप्तिर्नोत आह—नन्त्यमिति। (?)। ननु तन्मात्रपरत्व एव किं बीजमत आह—अत एवेति। तत्परत्वेन तस्याः साफल्यादेवेत्यर्थः। उत्तरार्धं तदेकदेशः। अन्यथा तुर्यचरणेनैवेष्टार्थलाभे मध्ये एतत्कथनानर्थक्यं स्पष्टमेवेति भावः। नन्वेवमपि तृतीयसदृशव्यवच्छेदप्रतीतावेवेयमित्यत्र किं विनिगमकमत आह—तृतीयेति। सब्रह्मेति। सदृशेत्यर्थः। एवमग्रेऽपि बोध्यम्। 'सिद्धान्तः' इति पाठः। 'सिद्धान्तात्' इत्यपपाठः। अन्यथा तस्य तज्जीवितत्वानङ्गीकारे। वाच्यमिति। 'अहं लतायाः' इत्यत्रातिव्याप्ति[व्याप्ति]वारणायेदानीं यत्नाव्यमित्यर्थः। विशेषणान्तरेति। अन्योन्येनेत्यादीत्यर्थः। नन्वेवं कथमुक्तदोषनिरासोऽत आह—तद्विशेषणेति। विशेषणान्तरेत्यर्थः। तदुक्तमन्यदूषयति—अन्योन्येनेति। प्रतियोगित्वस्येति। अनुयोगित्वविशिष्टेत्यादिः। ननु तस्य श्रुतिविषयत्वं कुतो

---

१. 'उत्तरार्धमपि'. २. 'मुखत्वमिव व्योम कुर्वन्व्योमेव मुखम्' इत्यत्राप्युपमेयोपमत्वनिवारणप्रयासवैयर्थ्यापत्तेः' इति रसगङ्गाधरे पाठः.

विशिष्टोपमैकवृत्तिमात्रवेद्येत्यप्ययुक्तमेव । 'खमिव जलं जलमिव खम्, हंसश्चन्द्र इव हंस इव चन्द्रः' इत्यादौ खजलयोश्चन्द्रहंसयोश्च सादृश्यान्वये प्रतियोगित्वस्य संसर्गत्वेन वृत्त्यविषयत्वात् । 'वृत्तिवेद्यानां पदार्थानां संसर्गो वृत्त्यवेद्यः' इति तात्पर्यवृत्तिमनङ्गीकुर्वाणैर्वाक्यविद्भिरभ्युपगमात् । अन्यथा प्रकारतापत्तेः ॥

इति श्रीमद्भट्टारकपेरमभट्टात्मजेन पण्डितराजापराभिधानेन जगन्नाथभट्टेन निर्मिते चित्रमीमांसाखण्डने उपमेयोपमाप्रकरणदोषाः ।

---

अथानन्वयः—

यच्च—"अयमनन्वयो व्यङ्ग्योऽप्यस्ति

'अद्य या मम गोविन्द जाता त्वयि गृहागते ।
कालेनैषा भवेत्प्रीतिस्तवैवागमनात्पुनः ॥'

अत्र गृहागतं श्रीकृष्णं प्रति विदुरवाक्यम् । 'इयं त्वदागमनप्रभवा प्रीतिर्बहुकालव्यवहितेन पुनरपि त्वदागमनेनैव भवेन्नान्येन, इत्युक्तिभङ्ग्या 'त्वदागमनप्रभवप्रीतेः सैव सदृशी, नत्वितरप्रभवा' इति व्यज्यते इत्यभिहितम्, तन्न । 'अमुष्यास्त्वदागमनप्रभवायाः प्रीतेर्वारान्तरत्वदागमनप्रभवा प्रीतिः सदृशी' इति प्रत्ययस्य सर्वजनसिद्धतया श्रीकृष्णागमनजन्यप्रीतिसामान्यावयवयोर्द्वयोः प्रीतिव्यक्त्योः सादृश्यस्याबाधायोगार्था-

---

नेत्याह—गृहीतेति । उपमानस्यैव वृत्तिमात्रवेद्यत्वे न तात्पर्यं किं तु वृत्तिद्वयवेद्यत्वाभावे । यद्वा तत्रान्यप्रतीतौ पदार्थसंनिधापकमात्रस्यैव सम्बन्धवेद्यत्वम् । अस्ति च 'खमिव जलम्' इत्यादौ । नास्ति च तत्रेति तथिरपर इत्याशयेनाहोपाधिन्त्वमिदम् ॥

अमुष्या इति । यत इत्यादिः । व्यञ्जनोक्तिर्भेदेनेति शेषः । योगार्थेति ।

---

१. 'इतिदेशिकवत्त'.

भावेनानन्वय एव नायं भवितुमर्हति, 'स्वस्मिन्स्वसादृश्यस्यान्वयाभावादनन्वयः' इत्युपमाप्रकरणे स्वयमेवाभिधानात् । उपमेयस्य प्रीतिव्यक्तिविशेषस्य सदृशान्तरव्यवच्छेदे बाधात्तादृशप्रीतिसामान्यस्यावयविनो निरुपमतया प्रतीयमानस्यानुपमेयत्वेन फलवैयधिकरण्यप्रसङ्गाच्च ॥ न चात्र 'श्रीकृष्णागमनप्रीतिसामान्यावयविनः स्वेन सादृश्यं मध्ये प्रतीयते' इति शपथः कर्तुमुचितः । सहृदयत्वभङ्गप्रसङ्गात् । प्रयोजनविरहाच्च ॥ श्रीकृष्णागमनप्रभवप्रीतिसामान्यस्य निरुपमत्वसिद्धिरेव प्रयोजनम्—इति चेन्न न । एतत्कालावच्छिन्नकालान्तरावच्छिन्नतादृशप्रीतिव्यक्त्योरवयवयोरुपमानोपमेयभावेनैवावयविनि तत्सिद्धेः । यथा—

'एतावति प्रपञ्चे सुन्दरमहिलासहस्रभरितेऽपि ।
अनुहरति सुभग तस्या वामार्धं दक्षिणार्धस्य ॥'

इत्यादाववयवयोर्वामार्धदक्षिणार्धयोः सादृश्येनावयविनः कान्तारूपस्यानुपमत्वं प्रतीयते । एवमिहापि ॥—नहि तत्रापि निरूपमत्वप्रतीत्यावयविनः स्वेन सादृश्यप्रत्ययोऽन्तरा कल्प्यते—इति वाच्यम् । निरुपमत्वप्रतीतेरनन्वयनैयत्यविरहात् । अन्यथा 'गगनपुष्पमिवास्य वचः सखे' इत्यादिकल्पितोपमायामपि निरुपमत्वप्रत्ययेनानन्वयकल्पनापत्तेरिति न किंचिदेतत् ॥

'रत्नाकरोक्तस्यैवानन्वयप्रकारविशेषस्यात्र व्यञ्जकता' इत्यपि वक्तुमयु-

---

अनन्वयपदयोगार्थेत्यर्थः । ननु रूढमेवानन्वयपदमभिमतमत आह—**स्वस्मिन्निति** । **व्यवच्छेदे बाधादिति** । तस्य व्यवच्छेदकरणेऽसामर्थ्यादित्यर्थः । कालान्तरस्थप्रीतिव्यक्तिविशेषस्य सदृशस्य सत्त्वादिति भावः । **तादृशेति** । श्रीकृष्णागमनजन्येत्यर्थः । **महिला** स्त्री । **दक्षिणार्धस्येति** कर्मणः शेषत्वविवक्षायां षष्ठी । अत्रोपमेयं समुदिता नायिका ॥ ननूक्तरीत्या न व्यञ्जकत्वम्, किं तु रत्नाकरोक्तरीत्येति नोक्तदोषोऽत आह—**रत्नेति** । तस्य प्रकारस्य प्रकृतेऽवाच्य-

त्तमेव । तस्य रसगङ्गाधरेऽस्माभिर्निरस्तत्वात् । भङ्क्तेऽवाच्यत्वात् । स्वयमनन्वयप्रकरणे तस्यानुक्तत्वाच्च ।

इदं पुनरनन्वयध्वनेरुदाहरणं मदीये गङ्गालवे—

'नगेभ्यो यान्तीनां कथय तटिनीनां कतमया
पुराणां संहर्तुः सुरधुनि कपर्दोऽधिरुरुहे ।
कया वा श्रीभर्तुः पदमितरयाक्षालि सलिले-
स्तुलालेशो यस्यां तव जननि दीयेत कविभिः ॥'

अत्रेतरयेत्येतन्माहात्म्यात् 'त्वयि तु तव तुला दीयेतैव' इत्यनन्वयो निरुपमत्वपर्यवसायी व्यज्यते । यथा वा—

'भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः ।
न भविष्यति नास्ति नाभवन्नृप यस्ते सदृशः क्षितौ परः ॥'

अत्राप्यपरशब्दमहिम्ना 'त्वं तु त्वत्तुल्नाधरो वर्तसे' इति व्यज्यते । तस्याभावे स्वसमालंकार एवेति रसगङ्गाधरे व्यक्तमुपपादितमस्माभिः ॥

इति श्रीमद्भट्टारकपेरमभट्टात्मजेन पण्डितराजापराभिधानेन जगन्नाथभट्टेन
निर्मिते चित्रमीमांसाखण्डनेऽनन्वयप्रकरणम् ।

---

अथ स्मरणालंकारप्रकरणम् ।

यत्तु—

"स्मृतिः सादृश्यमूला या वस्त्वन्तरसमाश्रया ।
स्मरणालंकृतिः सा स्यादव्यङ्ग्यत्वविशेषिता ॥'

---

त्वात् । ननु त्वया दुर्दिनेऽपि न मया दृष्टिः, तत्राह—स्वय-मिति । 'अन्यथा—अलंकारध्वनेर्वैयर्थ्यापत्तिः स्यात्' इति रसगङ्गाधरोक्तिं मन-[illegible]माह—इदं पुनरिति । नगेभ्यः पर्वतेभ्यः । कपर्दो जटाजूटः ।

यथा—

> 'अपि तुरगसमीपादुत्पतन्तं मयूरं
> न स रुचिरकलापं बाणलक्ष्यीचकार।
> सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
> रतिविगलितबन्धे केशपाशे प्रियायाः॥'

यथा वा—

> 'दिव्यानामपि कृतविस्मयां पुरस्ता-
> दम्भस्तः स्फुरदरविन्दचारुहस्ताम्।
> उद्वीक्ष्य श्रियमिव कांचिदुत्तरन्ती-
> मस्मार्षीज्जलनिधिमन्थनस्य शौरिः॥'

एकत्र सदृशदर्शनात्तत्सदृशधर्मिका स्मृतिः, अपरत्र सदृशदर्शनात्त-त्सदृशलक्ष्मीसंबन्धिनो जलनिधिमन्थनस्य स्मृतिः। उभयत्रापि सादृश्य-मूलकवस्त्वन्तरस्मृतित्वमविशिष्टम्। अत एव—सदृशासदृशसाधार-ण्यार्थतया लक्षणे वस्त्वन्तरग्रहणमर्थवत्।

---

अपीति। रघुवंशे दशरथमृगयावर्णनम्। स दशरथः। सादृश्यबोधकं केशपाशस्य विशेषणद्वयम्। दिव्यानामिति। माघे जलक्रीडावर्णनम्। अम्भस्तो जलात्। मन्थनस्येति। 'अधीगर्थ–' इति कर्मणि शेषे षष्ठी॥ लक्ष्यद्वये बीजमाह—एकत्रेति। मात्र इत्यर्थः। इत(अप)रत्र अन्त्ये। सदृशेति। लक्ष्मीसदृश-नायिकेत्यर्थः। लक्षणं संगमयति—उभयत्रेति। तथा च द्वितीयलक्ष्यसंग्रह एव 'वस्त्वन्तरसमाश्रया' इति विशेषणफलमित्याह—अत एवेति। द्वितीयस्य लक्ष्यत्वादेवेत्यर्थः। सदृशासदृशेति। स्मृतेः सदृशासदृशान्यतरविषयकत्व-

---

१. 'स्मृत' चित्रमीमांसा-रसगङ्गाधरयोः पाठः।

'सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि॥'

अत्र श्रुतकुरङ्गसंबन्धिनस्तन्नयनस्य स्मरणात्तत्सदृशसीतानयनस्मृतिश्चेति। किंत्वेषा व्यङ्ग्या अलंकार्यभूता च। तद्व्यावृत्त्यर्थमव्यङ्ग्यत्वविशेषणम्।

'अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः॥'

अत्र स्तूयमानभूसंबन्धिनो भूभृतः स्मृतिर्न सादृश्यमूलेति नात्र स्मरणमलंकारः, किंतु स्मृतेः संचारिभावस्य भूभृद्विषयकरतिभावाङ्गत्वात्प्रेयोऽलंकारः। एतद्व्यावृत्त्यर्थं लक्षणे 'सादृश्यमूल' इति विशेषणम्" इत्याहुः॥ तदेतत्सर्वमरमणीयम्। यत्तावदुच्यते—"सदृशासदृशयोः

---

तात्पर्यतयेत्यर्थः॥ अव्यङ्ग्यत्वविशेषणफलमाह—सौमित्रे इति। हनुमन्नाटके सीतावियोगे श्रीरामचन्द्रस्य लक्ष्मणं प्रत्युक्तिरियम्। ननु निश्चयेन। चण्डांशुः सूर्यः॥ तन्नयनेति। कुरङ्गनयनेत्यर्थः। तत्सदृशेति नयनविशेषणम्। इति। 'भूता च' इत्यग्रे योज्यः। एषा सीतास्मृतिः। अलंकारसामान्यलक्षणमपि नास्तीत्याह—यत्तमिति। सीतास्मृतेः प्राधान्यादिति भावः। अत्युच्चा इति। भुवं प्रत्युक्तिरियम्। प्रस्तौमि करोमि। इमां भुवम्॥ न सादृश्येति। किंतु 'एकसंबन्धि—' इति रीत्येति भावः॥ रतिभावेति। धर्मनिष्ठेत्यादिः। अरमणीयमिति। वक्ष्यमाणदोषादिति भावः॥ तानेव दोषांस्तावदनुवाद— यत्तावदिति। तत्र उच्यमाने तस्मिन्। मूल इति शेषः। तदाह

केशपाशजलनिधिमन्थनयोः संग्रहाय लक्षणे वस्त्वन्तरग्रहणमर्थवत्" इति, तत्र 'सादृश्यमूला स्मृतिः स्मरणालंकारः' इत्येतावतैव केशपाशस्मरणस्येव जलनिधिमन्थनस्मरणस्यापि संग्रहाद्वस्त्वन्तरसमाश्रयत्वविशेषणमनर्थकम् । एकत्र सादृश्यदर्शनोद्बुद्धसंस्कारजन्यत्वेन, अपरत्र च सादृश्यदर्शनोद्बुद्धसंस्कारजलक्ष्मीस्मरणोद्बुद्धसंस्कारजन्यत्वेन च, सादृश्यमूलकत्वस्याविशेषात् । नहि 'सादृश्यमूला' इत्युक्ते 'सदृशविषया' इति लभ्यते । येन जलनिधिस्मृतेरसंग्रहः स्यात् ॥ * ॥ यदपि—"-'सौमित्रे ननु सेव्यताम्—' इत्यत्र स्मृतिर्व्यङ्ग्यालंकार्यभूता च । तद्व्यावृत्त्यर्थमव्यङ्ग्यत्वविशेषणम्—" इत्युक्तम्, तत्र नेयं स्मृतिरलंकार्यभूता, किं तु जानक्यालम्बनो निशासमयोद्दीपितः संतापादिनानुभावित उन्मादेन च संचारिणा परिपोषितो विप्रलम्भः प्रधानत्वेनालंकार्यः, तस्य स्मृतिरुत्कर्षहेतुत्वादलंकार एव, अतो नितरां तद्व्यावृत्त्यर्थमव्यङ्ग्यत्वविशेषणमनुचितम् । नहि व्यङ्ग्यत्वालंकारत्वयोर्विरोध इति वक्तुं शक्यम्, नित्यव्यङ्ग्यानां रसभावादीनां पराङ्गतायामलंकारत्वाभ्युपग-

---

**सादृश्येति** । एवमग्रेऽपि । **केशेति** । तस्य सादृश्यत्वेन दृष्टान्ततयेति भावः । **स्यादिति** । इतीति शेषः । सादृश्यपदस्य नियमसंबन्धिकतया संबन्ध्याकाङ्क्षायामुपस्थितस्मर्यमाणस्यैवान्वयापत्तिः । न हि 'जनकत्वमूला पूज्यते' इत्युक्ते पुनर्जनकत्वेन भार्या पूज्यते । अतो 'वस्त्वन्तरसमाश्रया' इत्यावश्यकमिति चिन्त्यमिदम् ॥ **नेयं स्मृतिरलंकार्यभूतेति** । अत्र स्मृतेः 'हा क्वासि' इत्यादिपदगम्यत्वेन विवहनप्रवृत्तराजानुगम्यमानमृतस्यव । 'शठेन विधिना निद्रादरिद्रीकृत.' इत्यादौ शठादिपदगम्यासूया शुद्धा, तस्या एव प्राधान्यादलंकार्यत्वम् । अनुपस्कारकत्वाच्च विप्रलम्भस्यैव तत्त्वाचेति चिन्त्यम् ॥ **विप्रलम्भः** श्रीरामचन्द्रनिष्ठः । नितरामित्यस्यानौचित्येऽन्वयः । सदाशयं खण्डयति—**नहीति** ॥ **नित्येति** । सर्वदेत्यर्थः । कदाप्यव्यङ्ग्यत्वेति यावत् । नन्वेवं प्राधान्येऽप्यलं-

मात् । प्रधानव्यङ्गयव्यावृत्त्यर्थं पुनरुपस्कारकत्वं सर्वेष्वप्यलंकारलक्षणेषु देयमिति प्रागेवावेदितम् ।

यदप्युक्तम्—"'अत्युच्चाः परितः स्फुरन्ति–' इत्यत्र स्मृतेः संचारिभावस्य भूभृद्विषयकरतिभावाङ्गत्वात्प्रेयोलंकारत्वम्" इति । तत्र हि भावस्य भावाद्यङ्गतायां प्रेयोलंकारत्वम् । न ह्यत्र स्मृतिर्भावः, तस्याः स्मरतिना वाचकेनाभिधानात् । नहि वाच्यस्य व्यभिचारिणो भावत्वं वक्तुं युक्तम् । 'व्यभिचार्यञ्जितो भावः' इति सिद्धान्तस्य भङ्गापत्तेः । तथा चोक्तं सर्वस्वकृता—"प्रेयोलंकारस्य तु सादृश्यव्यतिरिक्तनिमित्तोत्थापिता स्मृतिर्विषयः । तत्रापि विभावाद्यागूरितत्वे । यथा—'अहो कोपेऽपि कान्तं मुखम्' इति, नतु स्वशब्दनिवेद्यत्वे । यथा—

'अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः ।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तम् ॥'

इत्यादौ" इति ॥ ननु—'भावाद्यङ्गीभूतभावत्वं न प्रेयोलंकारत्वम्, अपि तु—भावाद्यङ्गीभूतसंचारित्वमात्रम् । तथा च प्रकृते स्मरणस्य स्वशब्दनिवेद्यत्वेन भावत्वविरहेऽपि संचारित्वानपायात्प्रेयोलंकारत्वमविरुद्धमेव–' इति चेत् । एवं तर्हि 'इतराङ्गीभूतस्थायित्वमात्रं रसा-

---

कारत्वापत्तिरत आह—प्रधानेति । सर्वेषु न त्वत्रैव । तथा चालंकारसामान्यलक्षणग्रस्तत्वात्तस्य नातिप्रसङ्ग इति भावः ॥ सिद्धान्तेति । मम्मटभट्टादीनामिति शेषः । तद्ग्रन्थमाह—प्रेयोलमित्यादि इतीत्यन्तेन । तत्रापि तद्रूपस्यापि, न स्मृतिमपि । आगूरितत्वे आक्षिप्तत्वे । अत्रेति । पुष्पकेण लङ्कातोऽयोध्यां गच्छतः श्रीरामस्य सीतां प्रत्युक्तिरियं रघुवंशे । अनुगोदं गोदासमीपे ॥ वानीरेति । तृणधान्येत्यर्थः । सुप्तं स्वापः । इष्टापत्तिं परिहरति—

---

१. 'तत्र । भावस्य हि' इति पुस्तकान्तरपाठः.

लंकारत्वम्, नतु व्यज्यमानत्वविशिष्टम्' इत्यस्यापि सुवचत्वात्। एवं च

'चराचरोभयाकारजगत्कारणविग्रहम्।
कल्पान्तकालसंक्रुद्धं हरं सर्वहरं नुमः॥'

इत्यत्र क्रोधस्य स्वशब्दनिवेद्यत्वेऽपि देवताविषयकरतिभावाङ्गीभूतस्थायित्वानपायाद्रसालंकारः स्यात्। न च—इष्टापत्तिः। अपसिद्धान्तात्। तस्माद्—व्यज्यमानस्यैव संचारिणो भावाद्यङ्गतायां प्रेयोलंकारत्वम्—इति नात्र स्मृतिमादाय प्रेयोलंकारत्वं वाच्यम्। किं तु भूविषयकरतेः पूर्वार्धव्यङ्ग्याया उत्तरार्धगतभूभृद्विषयकरतिभावाङ्गत्वाद्युक्ता प्रेयोलंकारता। उक्तं च मम्मटभट्टैः—'अत्र भूविषयो रत्याख्यो भावो राजविषयकरतिभावस्य' इति॥ अपि च महदिदमाश्चर्यम्। यत्स्वेनैव निर्मितः कुवलयानन्दाख्यः संदर्भोऽपि विस्मृतः। उक्तं च तत्र शेषभागे—'विभावानुभावाभ्यामभिव्यञ्जितो निर्वेदादिः स यत्रापरस्याङ्गं स प्रेयोलंकारः' इति।

इति श्रीभट्टभट्टारकपेरमभट्टात्मजेन पण्डितराजापराभिधानेन जगन्नाथभट्टेन निर्मिते चित्रमीमांसाखण्डने स्मरणालंकारप्रकरणम्।

---

**एवं चेति।** तथा सुवचत्वे चेत्यर्थः। **स्वशब्दस्येति।** क्रुद्धमितीत्यर्थः॥ **रतिभावेति।** कविनिष्ठेत्यादिः। स्मृतिमादायेत्युक्तिफलमाह—**किं त्विति।** एवं च प्रेयोलंकारस्य सत्त्वेऽपि त्वत्कृतं तदुपपादनं चित्रमीमांसास्थमयुक्तमिति भावः। **भावस्येति।** अङ्गमिति शेषः। **स्वेनैव** अप्पयदीक्षितेनैव। **तत्र** कुवलयानन्दे। **निर्वेदादि**स्त्रयस्त्रिंशत्। **अपरस्य** भावादेः॥

---

१. 'व्यज्यमानस्यैव स्थायिनः पराङ्गत्वे यथा रसालंकारत्वम्, एवं व्यज्यमानस्यैव सं०' इति रसगङ्गाधरपाठः। २. 'इति रसगङ्गाधरान्तर्गतचित्रमीमांसाखण्डनसंग्रहे स्मरणालंकारप्रकरणम्' इत्यादर्शस्थपाठः।

अथ रूपकप्रकरणम् ।

यत्तु—

"बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते ।
उपरञ्जकतामेति विषयी रूपकं तदा ॥

अत्र 'बिम्बाविशिष्टे' इति विशेषणात्

'त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥'

इति निदर्शनाया निरासः, तत्र विषयस्य मार्जनस्यालक्तकादिरूपबिम्बविशिष्टत्वात् । 'निर्दिष्टे' इति विशेषणान्निगीर्णविषयायां 'कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्' इत्याद्यतिशयोक्तौ नातिव्याप्तिः । अनिह्नुते निषेधास्पृष्टे इति विशेषणादपह्नुतौ नातिव्याप्तिः । 'उपरञ्जकतामाहार्यताद्रूप्यनिश्चयगोचरतामेति' इत्यनेन ससंदेहोत्प्रेक्षयोर्निश्चयस्यैवाभावात् । समासोक्तौ व्यवहारमात्रसमारोपात् । परिणामे चारोप्यमाणस्यैव विषयताद्रूप्यनिश्चयगोचरत्वात् । भ्रान्तिमति सतः कल्पितस्य वा प्रवृत्त्यादिपर्यन्तिकस्यारसिकभ्रमस्यैव निबन्धनेन तस्यानाहार्यत्वात्" इत्याहुः ॥ तन्न, 'त्वत्पादनखरत्नानाम्' इत्यादिनिदर्शनाव्यावृत्त्यर्थं बिम्बाविशिष्टत्वं विषयविशेषणं तावदयुक्तमेव । तत्र वाक्यार्थरूपकस्य वक्ष्यमाणत्वेन लक्ष्यत्वात् । यदि च 'मुखं चन्द्रः' इत्यादि-

---

बिम्बेति ॥ अयं भावः—यथा चन्द्रः स्वतः शुभ्रत्वादनापादनीयधावल्यः, तथा नखाः स्वतोऽरुणत्वादनापादनीयारुण्या इति साहृदयेन नखानां चन्द्रस्य च बिम्बप्रतिबिम्बभावः । अलक्तकचन्दनयोरन्यत्र स्वधर्मापादकत्वेन सः । तथा च बिम्बप्रतिबिम्बभावो यत्र नखालक्तकविशिष्ट एव रञ्जने तत्प्रतिबिम्बभूतचन्द्रचन्दनविशिष्टं पाण्डुरीकरणमुपलक्षणम्—इति ॥ निर्दिष्ट इति । उपात्त

रूपकान्तर इवात्रापि वस्तुविशेषे वस्त्वन्तरतादात्म्यारोपे सत्यपि नेदं रूपकम्। अपि तु निदर्शना—इत्याग्रह्यते। तदा 'मुखं चन्द्रः' इत्यपि निदर्शना—इत्युच्यताम्। निरस्यतां च रूपकम्॥ किं च—'इन्दुशोभां वहत्यास्यम्—' इत्यादिपदार्थनिदर्शनायां कथमन्यस्यान्यः शोभां वोढुं समर्थ इति संबन्धस्यानुपपन्नत्वात्तच्छोभासदृशी शोभा लक्ष्यमाणा चन्द्रशोभया विषयिस्या निगीर्णेति साध्यवसानलक्षणामूलत्वं तावन्निर्विवादम्। वाक्यार्थनिदर्शनायां तु विषयविषयिणोरुपादानेऽप्यार्थ एवारोपो न शाब्दः। यथा—

'त्वत्पादनखरत्नानि यो रञ्जयति यावकैः।
इन्दुं चन्दनलेपेन पाण्डुरीकुरुते हि सः॥'

इत्यत्र। इह त्वत्पादनखरत्नकर्मकं यावककरणकं रञ्जनम्, इन्दुकर्मकचन्दनलेपकरणकपाण्डुरीकरणभिन्नमित्यारोपस्य व्यङ्ग्यत्वाद्भवति निदर्शना। 'त्वत्पादनखरत्नानाम्' इत्यत्र तु विषयविषयिणोः प्रथ[मा]न्तशब्दोपात्तयोरभेदसंसर्गेण बोधाच्छाब्द एवारोपो नार्थ इति रूपकमेव युक्तम्, न निदर्शना। रूपके बिम्बप्रतिबिम्बभावो नास्तीति तु भ्रान्तिमात्रम्, 'ययोरिवादिशब्दप्रयोगे उपमा, तयोरेकत्रान्यारोपे रूपकम्' इति नियमादत्र यदि रूपकं नाङ्गीकुरुषे, मैवाङ्गीकुरु तर्हि तत्रैवयथादेः प्रयोगे उपमामपि। एवम्—

'त्वयि कोपो महीपाल सुधांशाविव पावकः।'

इत्यादौ स्वकल्पितेन विशिष्टेन धर्मिणा सादृश्यस्य प्रत्ययादुपमां ब्रूषे, ब्रूहि तर्हि तत्रैवेवस्य निरासे

---

इत्यर्थः॥ तत्र येन यस्य व्यावृत्तिस्तत्क्रमेणाह—सममिति॥ अगोचरत्वे

'त्वयि कोपो महीपाल सुधांशौ हव्यवाहनः ।'

इत्यादौ रूपकमपि, तथा

'कुङ्कुमद्रवलिप्ताङ्गः कषायवसनो यतिः ।
कोमलातपवाल्पाभ्रसंध्याकाल इवाबभौ ॥'

इत्यत्र 'संध्याकालो न संशयः' इति कृते रूपकं भवितुं युक्तम् । 'त्वयि कोपः–' इत्यत्र 'कल्पितं रूपकम्' इह तु न तथेति विशेषः ॥ न च—एवमादौ प्रतीयमानोत्प्रेक्षा—इति वाच्यम्, निश्चीयमानत्वेनाभेदस्य भानात् ॥ किंच—आलंकारिकसंमतोऽयं रूपके बिम्बप्रतिबिम्बभावः । उक्तं हि विमर्शिन्याम्—

'कंदर्पद्विपकर्णकम्बुमलिनैर्दानाम्बुभिः क्षालितं
संलग्नाञ्जनपुञ्जकालिमकलं गण्डोपधानं रतेः ।
व्योमानोकहपुष्पगुच्छमलिभिः संछाद्यमानोदरं
पश्यैतच्छशिनः सुधासरुचिरं बिम्बं कलङ्काङ्कितम् ॥'

अत्र कलङ्कस्य दानाम्ब्वादिभिः प्रतिबिम्बनम्, लाञ्छितत्वाङ्कितयोः शुद्धसामान्यरूपत्वम्—इति ॥ तथा 'निर्दिष्टे शब्देनाभिहिते' इत्यस्य 'येन केनचिद्रूपेण शब्देनाभिहिते' इत्यर्थः, आहोस्वित्—'उपमेयतावच्छेदकरूपेण शब्देनाभिहिते' इत्यर्थः, आद्ये—

'सुन्दरं कमलं भाति लतायामिदमद्भुतम् ।'

इत्यत्रातिशयोक्तावतिप्रसङ्गः, सुन्दरपदेन सुन्दरत्वेन रूपेणेदंपदेन चान-

---

क्रमेण हेतू आह—समेति । अत्र स्वपादेऽस्त्र कंदर्पेति । कर्णेन पतीतस्य-रवः । कम्बुः शङ्खः । फलं रमणीयम् । 'अनोकहः वृक्षः यासः' ॥ शुद्ध-सामान्येति । अनयोर्बिम्बप्रतिबिम्बभावाभावत्वादिदं चिन्त्यम् ॥ द्वितीयविशे-षणं दूषयति—तथेति । आहोस्वित् अथवा । इत्यत्र रूपकातिशयोक्ति-

नस्य प्रतिपादनात् । न च—अत्र सुन्दरपदार्थस्यारोप्यमाणकमलान्वय एव, न तु वदनरूपविषयान्वयः—इति वाच्यम्, कमलपदेन कमलताद्रूप्येणाननस्यैव लक्षणयोपस्थापनाच्चैव सुन्दरादिपदार्थान्वयो युक्तः, न तु विशेषणीभूतेषु कमले ॥ अथ 'तादृशं विषयमुद्दिश्य विषयिताद्रूप्यं यत्र विधीयते' इत्यपि लक्षणवाक्यार्थः । प्रकृते च सुन्दरत्वावच्छिन्नमुद्दिश्य कमलताद्रूप्यस्याविधानान्नातिप्रसङ्गः—इति चेत्, न 'मुखचन्द्रस्तु सुन्दरः' इत्यादिरूपके समासं गतयोर्विषयविषयिणोः पृथग्विभक्तिमन्तरेणोद्देश्यविधेयभावबोधासंभवादव्याप्त्यापत्तेः ॥ द्वितीये तु—'अनिह्नुत–' इति विशेषणवैयर्थ्यम्, अपह्नुतावुपमेयतावच्छेदकस्य निषिध्यमानतया तेन रूपेण विषयस्यानिर्दिष्टत्वादेव लक्षणस्याप्रसक्तेः ।

---

विषये । **अन्वय एवेति** । तत एव चमत्कारात्सांनिध्याच्चेति भावः । रूपकातिशयोक्तिं ध्वनयितुमाह—**कमलेति** । **तत्रैव** आनन एव । **न त्विति** । 'पदार्थः पदार्थेन–' इति न्यायादिति भावः । **तादृशं** येनकेनचिद्रूपेण शब्देनाभिहितम् । **इत्यपि** उद्देश्यविधेयभावघटितोऽपि । **अविधानादिति** । तादृशमाननमुद्दिश्य मानक्रियाया एव विधेयत्वादिति भावः । यद्वा सुन्दरत्वादेः कमलत्वादिविशिष्टे विशेषणत्वमेवोद्देश्यतावच्छेदकत्वम् । इयांस्तु विशेषः—यदतिशयोक्तावुपमेयधर्मस्योद्देश्यतावच्छेदकत्वाभाव एव, रूपके त्वनियमः, इतीति भावः ॥ अत एवाह—**मुखचन्द्रस्त्विति** । **पृथगिति** । उद्देश्यविधेयभावेन बोधे भिन्नविभक्तिजन्योपस्थितेस्तन्त्रत्वात् । तथा च व्यस्ते तथा प्रतीतिः, न समस्ते इत्यनाव्याप्तिरिति भावः । ननूपमेयतावच्छेदकरूपेण शब्देनाभिहिते इति तदर्थेन प्रागुक्तदोषोऽत आह—**द्वितीये त्विति** । अपह्नुतौ 'नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम्' इत्यत्र । **अनिर्दिष्टत्वादेवेति** । अत्र निषेधप्रतियोगिविधया निर्दिष्टत्वादिदं चिन्त्यम् । न च तथा निर्दिष्टत्वेऽपि पुरस्काराभावः, तर्हि तावत्पर्यन्तविवक्षाबोधनार्थमेवानिह्नुत इति विशेषणसाफल्यादिति

निश्चयगताहार्यत्वविशेषणवैयर्थ्यं च, भ्रान्तिमति दोषविशेषेण प्रतिषिध्यमानतया नास्त्युपमेयतावच्छेदकस्पर्शः, इति तावतैव वारणात् ॥

यच्चाप्युक्तम्—'अव्यङ्ग्यत्वविशेषणाच्चेदमेवालंकारभूतस्य रूपकस्य लक्षणम्—' इति । तदपि निरस्तप्रायम् । न हि व्यङ्ग्यत्वालंकारत्वयोर्विरोधोऽस्ति, प्रधानव्यङ्ग्यरूपकवारणाय पुनरुपस्कारत्वं विशेषणमुचितमित्यसकृदावेदनात् । अनलंकारत्वस्य तुल्यतया प्रधानव्यङ्ग्यरूपकस्येव प्रधानवाच्यरूपकस्यापि वारणीयतया तद्वारकविशेषणाभावेन तत्रातिप्रसङ्गाच्च । रूपकलक्षणं तु रसगङ्गाधरादवगन्तव्यम् ॥

इति चित्रमीमांसाखण्डने रूपकप्रकरणम् ।

---

अथ परिणामः ।

यच्च वैयधिकरण्येन परिणामे दीक्षितेनोदाहृतम्—

'तारानायकशेखराय जगदाधाराय धाराधर-
च्छायाधारककंधराय गिरिजासङ्गैकशृङ्गारिणे ।

---

बोध्यम् । तावतैव उक्तार्थकनिर्दिष्ट इति विशेषणेनैव । इदं चिन्त्यम्—आहार्यत्वविशेषणस्य निर्दिष्ट इति विशेषणलभ्यार्थकथनतात्पर्यकत्वात् । अतिशयोक्तौ लक्षणामाहात्म्याज्ज्ञायमानज्ञानस्यानाहार्यस्यैव जायमानत्वेन तावतैव वारणात् । शक्यतावच्छेदकलक्ष्यतावच्छेदकयोर्भानमिति त्वल्लिखितमतान्तरेऽपि युगपदेवोभयोर्भानेन बाधस्यैवानुपस्थितत्वाच्च तद्वदेराहार्यत्वम् । किं च चन्द्रवृत्तिगुणवत्त्वलक्ष्यतावच्छेदकस्य चन्द्रत्वस्य च मिथोविरोधाभावेन न बाधप्रतिसंधानम् । मुखत्वेन मुखं लक्ष्यत इति त्वप्रदेयमेव । रूपके तु बाधस्य स्फुटमुपस्थितत्वेन साक्षाच्छब्दजनया वा जायमाना ताद्रूप्यप्रतिपत्तिराहार्यैवेति दीक्षिताशय इति दिक् ॥
इदमेव प्रागुक्तं रूपकलक्षणमेव। नन्वेवं कथमतिप्रसङ्गनिरासोऽत आह—प्रधानेति । नन्वेवमपि विनिगमनाविरहात्तयोकिरत आह—अनलमिति । मन्मते तु तेनैवोभयोर्वारणमिति भावः । इति रूपकप्रकरणम् ॥

अथ परिणामः ॥ तारेति । चन्द्रशेखरायेत्यर्थः । धाराधरेति । नील-

नद्या शेखरिणे दृशा तिलकिने नारायणेनास्रिणे
नागैः कङ्कणिने नगेन गृहिणे नाथाय सेयं नतिः ॥'

यथा वा—

'द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्प-
श्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः ।
द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्व-
न्नानन्दं कोविदानां जगति विजयते श्रीनृसिंहक्षितीन्द्रः ॥'

इति ॥ अत्र चिन्त्यते—'तारानायकशेखराय—' इति पद्ये तावत् गिरिजासङ्केकशृङ्गारिणि भगवति भवे नतिः प्रक्रान्ता । शृङ्गारिता च शेखरादीनि भूषणान्यपेक्षते इति नद्या आरोप्यमाणशेखररूपतयैवोपयोगो न स्वरूपेण । एवं च दृशोऽपि तिलकरूपतयेति रूपकमेव शुद्धं भवितुमर्हति ॥ ननु—'परिणामे विषयाभिन्नतया विषयिणोऽवस्थानम्' इति भवतैवोक्तम् । तदत्र नद्यादेर्विषयस्य तृतीययाभेदः प्रतिपाद्यमानो विषयिणि शेखरादौ भासत इति कथं नाम रूपकं स्यात्—इति चेत्

'मीनवती नयनाभ्यां करचरणाभ्यैः प्रफुल्लकमलवती ।
शैवालिनी च केशैः सरसेयं सुन्दरीसरसी ॥'

इत्यत्र व्यधिकरणरूपके सुन्दर्यां सरसीतादात्म्यस्य मीनकमलशैवालग-तैर्नयनकरादिकेशाभेदैर्मनागप्यसमर्थनात् । प्रत्युत—नयनकरादिकेशग-

---

र्भीयायेत्यर्थः । नद्या गङ्गया । दृशा भालचक्षुषा । नगेन कैलासेन ॥ कोवि-दानां पण्डितानाम् ॥ शुद्धं रूपकामिश्रम् ॥ पद्यमिति । परे तु—"मीनवती नयनाभ्याम्" इत्यत्र सुन्दर्यां सरसीतादात्म्यरूपं रूपकं मुख्यवाक्यार्थः । तत्र च मीनवत्त्वादिः साधारणो धर्मः । तस्य च सुन्दर्यामभावात्प्राप्तवाधबुद्धिस्थग-नाय 'नयनाभ्यां मीनवती' इति सुन्दरीविशेषणम् । सरस्यां मीनवत्त्वं प्रसिद्ध-

तेर्मीनकमलशैवालाभेदैश्च समर्थनाद्यथा स्वनिष्ठाभेदे प्रतियोगित्वं तृतीयार्थः, एवं 'नवा शेखरिणे दृशा तिलकिने—' इत्यत्रापीति क्व विषयिणि विषयप्रतियोगिकाभेदपर्यवसानम् ॥ यदि पुनरारोप्यमाणे यथाकथंचिद्विषयाभेदप्रत्ययमात्रात्परिणामतोच्यते, तदा 'प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्' इति त्वदुदाहृतरूपकस्य परिणामतापत्तेः । 'प्रेमलतिकाम्' इति समासे प्रेम्णो विषयस्य लतिकायामारोप्यमाणायामभेदेन विशेषणत्वात् । विस्तृतिश्च रसगङ्गाधरादवसेया । 'द्विर्भावः पुष्पकेतोः—' इति पद्येऽपि—कोविदानन्दजननजगदुरुकर्पौ राज्ञो नृसिंहस्य कथ्येते । तत्र कोविदानन्दजनकत्वं राज्ञ आरोप्यमाणद्वितीयमन्मथादितादूप्येण यथा संभवति, न तथा केवलेन स्वरूपेण । तथा हि—अहो नयनानामस्मदीयानां साफल्यं यदयमपरो मन्मथोऽस्माभिरालोक्यत इति मन्यमानानां तेषां नयनानामानन्दस्तावत्पुष्पकेतुनैवोत्पाद्यते न राज्ञा । एवम्—अपरोऽयं कल्पतरुः, द्वितीयश्चिन्तामणिः कर्णश्च, तथा वासवो भूगतोऽयमन्यो दारिद्र्यमस्माकमपहरिष्यति ।

---

मेव । एवं च सुन्दर्या मीनपरत्वसंपादनरूपप्रकृतकार्योपयोगिनां मीनानां नयनात्मतापत्त्यैवेति तदंशे परिणाम एवेति नयनप्रतियोगिकाभेदवन्मीनवतीति बोध इति दिक् । 'पादाम्बुजं भवतु नो विजयाय मञ्जु' इत्यादौ 'रूपकोपमयोः संदेह एव' इति प्राहुः ॥ कथ्येते इति । शब्दतस्तदन्ताभ्यामिति भावः । तत्र द्वयोर्मध्ये । 'द्विर्भावः पुष्पकेतोः—' इत्यस्यार्थमाह—द्वितीयमन्मथेति । 'विबुध—' इति वाक्यार्थमाह—अपरोऽयं कल्पतरुरिति । एवं च बहुवचनं कल्पभेदाभिप्रायेण । 'विकल्पचिन्तारत्नस्य' इत्यस्यार्थमाह—द्वितीयश्चिन्तामणिरिति । द्वितीय इत्यस्यात्रेऽप्यनुषङ्गो बोध्यः । 'तपन—' इत्यादेरर्थमाह—कर्ण इति । भूगत इत्यनेन प्रसिद्धेन्द्राद्व्यतिरेकः सूचितः । 'इतं देवस्य' इत्या-

हरिः खल्वयं संसारं नः परिहरिष्यतीत्यभिमानाज्जायमानस्तेषामानन्दोऽप्यारोप्यमाणैः कल्पवृक्षादिभिरेवेति न विषयात्मना विषयिण उपयोगः, अपि तु स्वात्मनैवेति कुत्रास्ति परिणामः। अत एवेदं पद्यं रूपकप्रकरणे विमर्शिनीकारादिभिरालंकारिकैरुदाहृतमिति तद्ग्रन्थविरोधश्च॥

यच्च विद्याधरोक्तं परिणामध्वन्युदाहरणमनूद्य दूषितम्। तथाहि—

"नरसिंह धरानाथ के वयं तव वर्णने।
अपि राजानमाक्रम्य यशो यस्य विजृम्भते॥

अत्र राजपदेन चन्द्रे विषये निर्दिष्टे तत्रारोप्यमाणस्य नृपस्याक्रमणरूपकार्योपयोगिनः प्रतीतेः परिणामो व्यज्यते— इति॥ तदयुक्तम्। तत्र ह्यारोप्यमाणस्य नृपस्य नृपात्मनैवाक्रमणोपयोगः, न चन्द्रात्मना" इति। तदसत्। अत्र विजृम्भणं नाम न केवलं प्रागल्भ्यमात्रं कवेरभिप्रेतम्, येन यशःकर्तृकाक्रमणे नृपस्य नृपात्मनैव कर्मतारूप उपयोगः स्यात्। अपि तु निरतिशयनैर्मल्यगुणवत्तायां स्वसमानजातीयद्वितीयराहित्यप्रयुक्तः प्रौढिविशेषः। आक्रमणं न्यग्भाव एव। एवं चैवंविधे विजृम्भणे चन्द्रकर्मकमाक्रमणमुपयुज्यते, न तु नृपकर्मकमिति विषयितया व्यज्यमानस्यापि नृपस्य चन्द्रात्मनैवाक्रमणोपयोग इति रमणीयमेव विद्याधरेणोक्तं परिणामव्यङ्ग्यतायामुदाहरणम्॥

---

यदेमाह—हरिरिति। दूषितमित्यस्य 'चन्द्रात्मनेति' इत्यन्तेनान्वयः। अत्र प्रागुक्तपद्ये। गुणवत्तायां तद्रूपसाधारणधर्मे। एवं च विजृम्भणाक्रमणयोरुक्तरूपत्वे च॥ रमणीयमेवेति। तत्रेदं चिन्त्यम्—"राजशब्दस्यानेकार्थत्वात्, विजृम्भतेश्च प्रागल्भ्यतद्गुणयोर्मयपरत्वात्, प्रकरणादेश्च शक्तिसंकोचकस्याभावात्, तत्र्याग पर्यस्यैव तुल्यतयार्थद्वयोपस्थितौ 'सवंदो माधवः पातु' इतिवच्छ्लेष एवायम्, न परिणामः। क वा नृपस्य व्यज्यमानतेति प्रकृतनरसिंह-

यदपि परोक्तिं दूषयित्वा स्वयं परिणामव्यङ्ग्यतायामुक्तम्—

"चिराद्विषहसे तापं चित्त चिन्तां परित्यज।
नन्वस्ति शीतलं शौरेः पादाब्जनखचन्द्रमाः॥'

अत्र चिरतापार्तं प्रति हरिपादनखचन्द्रसद्भावप्रदर्शनेन 'तमेव निषेवस्व, तन्निषेवणादयं तापस्तव शान्तिमेष्यति' इति परिणामो व्यज्यते" इति॥ तत्तुच्छमेव। 'आरोप्यमाणस्य विषयात्मकत्वेन प्रकृतकार्योपयोगे परिणामः' इति स्वयमेवोक्तम्। तत्र प्रकृतकार्योपयोगमात्रं न परिणामशरीरम्, अपि तु विषयिगतायाः प्रकृतकार्योपयोगिताया अवच्छेदकीभूतविषयतादात्म्यम्। अत एव रूपकप्रकारविशेषत्वमस्यान्यैरालंकारिकैः स्वयं च तत्र तत्राभिहितम्। एवं चात्र नखचन्द्रसद्भावप्रदर्शनेन 'तन्निषेवणादयं ते तापः शान्तिमेष्यति' इति प्रकृतोपयोगिताया व्यङ्ग्यत्वेऽपि तदवच्छेदकीभूतस्य विषयिणि विषयतादात्म्यरूपस्य परि-

---

राजोत्कर्षस्य चन्द्रकर्मणाक्रमणेनेवेतरन्तृपाक्रमणेनापि सूपपादत्वम्। न च द्वयोरपि राजपदार्थयोरितरक्रियान्वये राजानाविति द्विवचनं स्यादिति वाच्यम्, 'न ब्राह्मणं हन्यात्' इतिवदुपपत्तेः। समाहारद्वन्द्वविषयेऽप्येकशेषस्य कैश्चिद्वैयाकरणैरङ्गीकाराच्च। अस्तु वारोपः, तथापि नृपस्यैवारोप्यमाणत्वम्, चन्द्रस्यैव विषयत्वमित्यत्र नियामकाभावः। अत्रैव च दीक्षिततात्पर्यम्। अपि च प्रागल्भ्यस्यापि विजृम्भमाणत्वेन प्रकृतकार्योपयोगिना नृपत्वेनापि नृपस्य संभवति। अत एव विद्याधरेणापि 'विषयिणः स्वरूपेण प्रकृतधर्मानुपयोगित्वे तदुपयोगाय विषयिणो विषयात्मनोपरिणत्यपेक्षायामेव परिणामः' इत्युक्तम्। यदाह—'तं परिणामं द्विविधं कथयन्त्यारोप्यमाणविषयतया। परिणमति यत्र विषयी प्रस्तुतकार्योपयोगाय॥' इति। ननु 'तात्पर्यविषयीभूतप्रकृतधर्मानुपयोगित्वमस्त्येव—' इति चेत्, तस्यैव तात्पर्यविषयत्वे मानं विभावय—" इति॥ परोक्तिं विधानापोषितम्। स्वयमेव अपरीक्षितेनैव॥ चिरतापार्तं 'चित्तम्' इति शेषः॥ वैयाकरणमतेनाह—

णामस्य वाक्यवाच्यत्वाच्छक्यसंसर्गत्वाद्वा सर्वथैव न व्यङ्ग्यत्वं वक्तुमुचितम् । विद्याधरोक्तोदाहरणे तु नियन्त्रिताया अभिधाया विषयचन्द्राभेदवेदनाक्षमतया शब्दशक्तिमूलानुसरणस्य नास्त्युपयोगः ॥

इति चित्रमीमांसाखण्डने परिणामप्रकरणम् ।

---

अथ ससंदेहः ।

यत्तु—

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥'

अत्र चन्द्रादीनां संदेहधर्मिणामेवानेकत्वम् । प्रकारस्तु वर्णनीयवनितास्रष्टृत्वमेकमेवेत्यनेककोटित्वाभावात्—विरोधेन परस्परप्रतिक्षेपकतया निबद्धानेककोट्यवगाहित्वरूपस्य संशयलक्षणस्याव्याप्तिमाहुः ॥ तन्न । अत्र हि 'अस्याः सर्गविधौ यः प्रजापतिरभूत्, स किं नु चन्द्रः, किं नु मदनः, किं वा नु वसन्तः' इति संशयः प्रजापतिधर्मिकश्चन्द्रत्वादिनानाकोटिक एवेति कुत्राव्याप्तिः । न च—अत्र चन्द्रादिधर्मिकः संशयो युक्तो वक्तुम् । एवं च प्रजापतेः प्रथमोद्देशो न स्यात् । दोषदानाय वाक्यान्तरकल्पनेन तथा कव्यभिप्रायवर्णनादौचित्यात् ॥

---

वाक्येति । नैयायिकमतेनाह—वाक्येति । इति परिणामप्रकरणम् ॥

अस्या इति । विक्रमोर्वशीये उर्वशीवर्णनमिदम् । मासो वसन्तः । वनिता स्रष्टृत्वं प्रजापतिशब्दबोध्यम् । अभावादित्यव्याप्तौ हेतुः । संशयलक्षणमाह—विरोधेनेति । हि यतः । अस्या उर्वश्याः । तदुपपादनं खण्डयति—न चेति । एवं चेति । चो ह्यर्थे । यत एवं ततीत्यर्थः । विधेयस्य

यदपि प्राचां लक्षणम्

'साम्यादप्रकृतार्थस्य या धीरनवधारणा ।
प्रकृतार्थाश्रया तज्ज्ञैः ससंदेहः स इष्यते ॥'

इति महता प्रबन्धेन त एव दूषितवन्तः ॥ तदपि न । साम्यनिमित्तनिश्चयसंभावनान्यतरभिन्ना या धीः इति तदर्थकरणे दोषाभावात् । निश्चयत्वं तु संशयाघटितमेव निर्वक्तव्यम् ॥

यदपि च संशयध्वन्युदाहरणप्रसङ्गे—

'कांचित्काञ्चनगौराङ्गीं वीक्ष्य साक्षादिव स्वयम् ।
वरदः संशयाविष्टो वक्षःस्थलमवैक्षत ॥'

इत्यस्मत्कुलकूटस्थवक्षःस्थलाचार्यकृतवरदराजवसन्तोत्सवान्तर्गते पद्ये संशयस्य स्वशब्दोपात्तत्वेऽपि तावन्मात्रस्यानलंकारत्वात्तदलंकारताप्रयोजकस्य 'वक्षःस्थले स्थितैव लक्ष्मीस्ततोऽवतीर्य किं पुरस्तिष्ठति' इत्येवं संशयाकारस्य 'वक्षःस्थलमवैक्षत' इत्यनेन व्यङ्ग्यत्वात्संदेहालंकृतिध्वनिरेवेति ॥ यथा—

'दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कान्यपि चकार लज्जया ॥'

इत्यत्र 'कानि कान्यपि' इति सामान्यतो निर्दिष्टानुभावविशेषप्रतीत्यर्थं लज्जाशब्दप्रयोगेऽपि तस्याः स्वभावानुभावाभ्यां रसानुगुणाभिव्यक्तिरूपो ध्वनिः—" इत्याहुः ॥ तदेतद्ध्वनितत्त्वज्ञैरुपहसनीयम् ।

---

पाथात्मनिरि नियमादिति भावः । त एव धन्यदीक्षिता एव ॥ अनवधारणेरूपस्य तात्पर्यमाह—निश्चयेति ॥ अन्येषामन्योन्याभावापत्तिरित्यत आह—निश्चयत्वं त्विति ॥ कांचिदिति । इदं च पञ्चाशदीधितिः कुलकूटस्थवक्षःस्थलाचार्यकृतवरदराजवसन्तोत्सवस्थम् । वरदः काञ्चीदेवता विष्णुः । तदिति ।

तथाहि—'संशयाविष्टः' इत्यत्र संशयपदेनैकस्मिन्पदार्थे विरुद्धनानापदार्थसंबन्धावगाहिज्ञानं साक्षादेव निवेद्यते । तत्र कोऽसौ विरुद्धो नानार्थ इति विशेषाकाङ्क्षया वक्षःस्थलवेक्षणेन 'वक्षःस्थलस्थैव लक्ष्मीस्ततोऽवतीर्य किं पुरस्तिष्ठति' इत्यादिरर्थो व्यञ्जनव्यापारेण बोध्यमानः शक्त्या संशयशब्दनिवेदितज्ञानविशेषणीभूतेन सामान्यार्थेन साकमभेदेन पर्यवस्यति । एवं च [1]संशयमात्रस्य शक्त्या बोधनात् 'वक्षःस्थलस्थितैव' इत्यादिविषयविभागस्यापि विरुद्धनानार्थत्वेन सामान्याकारेणावलीढतया तयैव कवलीकरणाद्वाच्यार्थसंशयपर्यवसायकत्वाच्च न कस्यापि ध्वनिव्यपदेशहेतुत्वमुचितम् । सर्वथा वाच्यवृत्त्यचुम्बितस्यैव तथात्वमिति ध्वनिमार्गप्रदर्शकैः सिद्धान्तितत्वात् । तथा च द्वितीयोद्द्योते—

'शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः ।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः ॥'

इति सूत्रयित्वा

'संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
ह(ह)सन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥'

---

संशयेत्यर्थः । तत्र सामान्यज्ञाने । अवेक्षणेनेति । व्यञ्जनार्थवृत्तिरपीति भावः । संशयमात्रस्येति । सर्वस्य संशयस्य । अर्थत्वेन सामेति । एतद्रूपसामान्याकारेणेत्यर्थः । अवलीढेति । बोध्यतयेत्यर्थः । तयैव शक्त्यैव । कवलीति । बोधनादित्यर्थः । नन्वेवमपि विशेषरूपेण व्यङ्ग्यत्वमेवात आह—वाच्यार्थेति । विशेषसंशयस्येत्यादिः । तदाह—कस्यापीति । विशेषस्यापीत्यर्थः । सर्वथा केनापि प्रकारेण । तथात्वं ध्वनित्वम् । संकेतेति । यो यावयोरविफलस्वरसंकेतमित्यत्र (!) दत्तचित्तमित्यर्थः । हसदिति भिन्नाविशेष-

---

१. 'संशयपदार्थस्य' इत्यादर्शपाठः.

अत्र 'संकेतकालमनसं विटं ज्ञात्वा लीलापद्मं निमीलितम्' इति वदता कविना लीलापद्मनिमीलनस्य प्रदोषाभिव्यञ्जकत्वं स्वोक्त्यैव निवेदितमिति ध्वनिमार्गोद्‌यमपर एव गुणीभूतव्यङ्ग्यस्य मार्गः । यथा वा—

> 'अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
> निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथात्र ।
> अस्मिन्पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा
> पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥'

'अत्र निःशङ्कं रन्तुमायाहि' इत्यर्थश्शरणत्रयव्यङ्ग्योऽप्यवसरव्याहृतेर्व्याजत्वं ब्रुवता कविना स्फुटं स्वोक्त्या निवेदित इत्ययमपि न ध्वनेर्मार्गः" इत्याहुरानन्दवर्धनाचार्याः । एवं चैवंविधेषु विषयेषु व्यञ्जकत्वस्य व्यङ्ग्यस्य वा मनागुक्तिसंस्पर्शमात्रेण ध्वनित्वं निराकुर्वाणाः 'कांचित्काञ्चनगौराङ्गीम्' इति पद्ये शब्दाभिहितव्यङ्ग्ये ध्वनित्वं कथमिव स्वीकुर्वीरन् ॥' एतेन 'दर्पणे च परिभोगदर्शिनीम्—' इति प्रागुक्तपद्ये लज्जाध्वनित्वं यदभ्यधीयत, तदप्यपास्तमिति दिक् ॥

इति चित्रमीमांसाखण्डने शेषालंकृतिः ।

---

नम् । इति वदतेति । पदान्तरासमभिव्याहृतं वदतेत्यर्थः । अन्यथा पदान्तरासमेनैवार्थांतदभिव्यञ्जकत्वे सिद्धे स्वोक्त्यानर्थक्यं स्पष्टमेव । तदाह—स्वोक्त्यैवेति । पदान्तरासमेनेत्यर्थः । अत्र वृद्धदेवरविशेषे । एवमग्रेऽपि । कुम्भेति पान्थसंबोधनमिति कश्चित् । स्थानीय दासीत्यन्ये । जलस्याहरणार्थं दासी, न क्रीडादासीति तत्त्वम् । निद्रोपगमनमुक्तम् । कतिपयेत्यनेन दूरगमननाभावः सूचितः । अवसरे समये उक्तेन्द्रमपूर्वमित्यर्थः । पूर्वं शब्दशक्त्येनाह—व्यञ्जकेति । द्वितीयार्थेनाह—व्यङ्ग्येति ॥

अथ भ्रान्तिमान् ।

यच्च—

'कविसंमतसादृश्याद्विषये पिहितात्मनि ।
आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः ॥'

इतिलक्षणं तैरुक्तम्, तत्र । 'कविसंमतसादृश्यप्रयोज्यो विषय आरोप्यमाणो यत्र वाक्संदर्भे स भ्रान्तिमान्' इति भ्रान्तिमतो लक्षणं विहाय रूपकव्यावृत्त्यर्थं 'पिहितात्मनि' इत्युच्यते, न चैतद्युक्तम् । न हि रूपकवाक्य आरोप्यमाणस्यानुभवो वर्ण्यते, किं तु तस्माज्जायते । न च—अत्रानुभवान्तं भ्रान्तेर्लक्षणम्, अग्रिमं च भ्रान्तिमतः । तत्र भ्रान्तिलक्षणे रूपकातिव्याप्तिवारणाय 'विषये पिहितात्मनि' इति विशेषणम् इति वाच्यम् । अनुभवत्वघटितस्य भ्रान्तिलक्षणस्यानुभूयमानाभेदात्मके रूपके कथमप्यवृत्तेः ॥ यदि च—रूपकपदं रूपकबुद्धिपरमिति ग्रन्थसामञ्जस्यं विधीयते, तदा विषयतावच्छेदकानवगाहिनि

'मरकतमणिमेदिनीधरो वा तरुणतरस्तरुरेव वा तमालः ।
रघुपतिमवलोक्य तत्र दूरादृषिनिकरैरिति संशयः प्रपेदे ॥'

इति संशयेऽतिप्रसङ्गः । 'कमलमिति चञ्चरीकाः, चन्द्र इति चकोरास्त्वन्मुखमनुधावन्ति' इति भ्रान्तिसमुदायात्मके उल्लेखेऽतिव्याप्तेश्च ॥

---

अथ भ्रान्तिमान् ।

उच्यत इति । अयं भावः—तद्विशेषणेनारोप्यमाणानुभवस्य स्वारसिकस्य कविप्रतिभया कल्पनं विवक्षितम्, तस्यैव विषयपिधानसामर्थ्यात्—इति ॥ अग्रिमं चेति । यथेत्याद्युक्तमित्यर्थः ॥ तत्रेति । तदाश्रयानुभवस्य तत्रापि गम्यमानत्वादिति भावः ॥ ननु नाम(?) संशयेऽतिप्रसङ्गः, विषयस्येति प्रतिपादनादत आह—कमलमिति । अत एव वक्ष्यति—'भ्रान्त्या संकीर्ण' इति । अतिव्याप्तेश्चेति । उल्लेखस्य भ्रान्तिसमुदायात्मत्वेन संकीर्णत्वं वाच्यत्वाभावादृष्यगुणत्वयो-

अत्र भ्रान्त्या संकीर्ण उल्लेख इति चेत्, नह्येतावतोल्लेखांशातिव्याप्तिर्न दोषः । नहि दुग्धभागजलभागानां व्यामिश्रणमस्तीति दुग्धलक्षणं जलांशातिव्याप्तिकं कर्तुं युक्तम् । ऐकल्यविवक्षायाः स्वयमनुद्धारात् । तथा चासत्कृतलक्षण एव पर्यवसानम् ॥

यदपि च भिन्नकर्तृकोत्तरोत्तरभ्रान्त्यावुदाहरणं दत्तम्—

'शिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकै-
स्त्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः ।
तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकै-
रित्थं चोलेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ॥'

इति ॥ अत्र विचार्यते—स्तनकलशयुगे हि न तावन्मञ्जरीसादृश्यं कविसमयसिद्धम्, येन तन्मूला चञ्चरीकाणां भ्रान्तिरुपनिबध्येत । 'दोषान्तरमूला तु सा नालंकारः' इत्यनुपदमेवोक्तम् ॥ अपि च—धर्मिणि कलशरूपकानुवादेन मञ्जरीभ्रान्तिरूपमलंकारान्तरमुपनिबध्यमानमुद्वेजकमेव सहृदयानाम् । 'नहि सादृश्यमूलकालंकारावच्छिन्ने सादृश्यमूलमलंकारान्तरं शोभते । तथा—'मुखकमलं तव चन्द्रवदभाति' ·

---

रिव । 'नरैवैरमतिप्रद' इत्युदाहरणस्य 'कनक इव' इत्यत्र भ्रान्तित्वस्य पाप-बाधकत्वादिति कश्चित् । 'मनिरेति वदनेनेन शोकः' इति [illegible]- [illegible] । एवं [illegible] ॥ तावद्भ्रान्तौ । उपेति । [illegible] ॥ ननु [illegible] आह—अपि चेति । धर्मिणि स्तनरूपे । मुखकमलेति

---

१. [illegible] २. '[illegible]' [illegible]. ३. 'तत्र' [illegible].

इति प्रागेवावेदनात् ॥ प्रत्युत—केलशरूपकेण मञ्जरीसादृश्यतिरस्काराच्च । तथा 'तत्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः' इत्यत्र, विधेयाविमर्शाद्विधेयान्तरमाकाङ्क्षितम् । कीरैर्दष्टा इति तु भाव्यम् । जाता इत्यध्याहारेऽपि विवक्षितस्याविधेयत्वम्, अविवक्षितं च विधेयत्वं प्रसज्येत ॥ एवम्—'तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकैः' इत्यत्र न तावत्पिकनिनदास्ताडनयोग्याः काकानाम्, येन तद्धिया आलपन्त्यस्तैस्ताड्येरन् । नापि पिकनिनदभ्रम आलपन्तीषु संभवति, संभवन्वा न सादृश्यमूलः । 'पिकनिकरधिया' इति तु भाव्यम् ॥ अथ—तदालापेषु पिकनिनदबुद्धेरपि तासु पिकबुद्ध्युत्पादनद्वारा संभवत्येव ताडनोपयोग इति प्रयोज्यत्वार्थकतृतीयया पिकनिनदधीप्रयोज्यकाककर्तृकताडनकर्मत्वमालपन्तीनां सुप्रतिपादमेव—इति चेत् । नैवम् । तथा प्रतीतेरसिद्धेः । 'चौरबुद्ध्या हतः साधुः' इत्यादौ चौरबुद्धिहननयोः सामानाधिकरण्येन हेतुहेतुमद्भावगमकत्वव्युत्पत्तेः ॥ एवम्—'दन्तिबुद्ध्या हतः शूरैर्वराहो वनगोचरः ।' इत्यत्रापि विशेष्यतया वराहवृत्तेर्दन्तिबुद्धेर्वराहवृत्तिहननहेतुभावावगमः । त्वदुक्तरीत्या 'दन्तबुद्ध्या' इति तु कृते बोधकदर्थनैव ॥ किंच—पिकानां कूजितादिशब्दैरेव शब्दो वर्ण्यते, न तु निनदादिशब्दैः सिंहदुन्दुभ्यादिशब्दम-

---

रूपकम् ॥ अभ्युपेत्याह—प्रत्युतेति । एवमाद्ये दोषमुक्त्वा द्वितीये दोषमाह—तत्रासोल्लेति । भ्रमरभयजनकजातचेष्टा इत्यर्थः ॥ विधेयाविमर्शादिति । विधेयस्याकथनादित्यर्थः । उद्देश्यकोटिप्रविष्टं सर्वमिति भावः । पाणी उद्देश्य विशिष्टस्य कीरकर्तृकदष्टत्वस्य विधेयत्वे । को दोष इति चिन्त्यमिदम् । विधेयेति । इष्टस्येत्यर्थः ॥ तृतीयं चाह—एवमिति । तल्लोपाय कीरदष्टीकरणाय । तापदाद्री । दोषमूलः संभवन्नाह—संभवन्वेति । सादृश्ययोरेति ।

योगयोग्यैः । तथा—प्रथमद्वितीयचरणस्थयोः स्तनपाण्योर्यथाकथंचिदन्वयविरहितमपि जातान्वयमपि 'त्वदरिमृगदृशाम्' इत्येतत्पष्ठ्यन्तमन्वेतुं शक्नुयात्, न तु तृतीयचरणस्थे 'तल्लोपायालपन्त्यः' इत्यस्मिन्विशेषणे विशेष्यभावेनेति तासां ताटस्थ्यमेव स्यात् । विभक्तिविपरिणामेऽपि क्रमभङ्गासंष्ठुलत्वाभ्यां स्थितमेवेति पद्यमव्युत्पन्ननिर्मितमेवेदम् ॥ दीक्षितैस्तु भ्रान्त्यलंकारांशमादायोदाहृतमिति न तेषां तथा दोषः ॥

इति चित्रमीमांसाखण्डने भ्रान्त्यलंकारः ।

---

अथोल्लेखः ।

यत्तु तैरेवाभिहितम्—"एवमपि यदि—

'कान्त्या चन्द्रं विदुः केचित्सौरभेणाम्बुजं परे ।
वक्त्रं तव वयं भूमस्तपसैक्यं गतं द्वयम् ॥'

इत्यत्रैवोदाहरणविशेषेऽतिव्याप्तिः शङ्क्या ॥ तदानीमनेकधोल्लेखनं निषेधास्पृष्टत्वेन विशेषणीयम् । तत्राद्योल्लेखनद्वयं परमतत्वोपन्याससामर्थ्याद्गम्यमाननिषेधमिति नातिव्याप्तिः—" इति तन्न, "द्विविधश्चायमुल्लेखः—'शुद्धोऽलंकारान्तरसंकीर्णश्च'" इत्युक्त्वा "श्रीकण्ठजनपद-

---

शब्दे प्रयोगेऽस्यार्थ । आसत्त्याकाङ्क्षयो. स्वारसिकयोरभावादाह—यथाकथंचिदिति । जातान्वयेति । 'नाप्यरण्यं शरण्यम्' इति सन्निहितेनेति भाव. । न त्विति । विभिन्नविभक्तित्वात्तस्मिन्नभेदाभावाच्चेति भावः । ननु विभक्तिविपरिणामेनाभेदान्वयः सुलभोऽत आह—विभक्तीति । क्रमभेति । नन्वेवं दीक्षिते. कथमुदाहृतमत आह—दीक्षितैरिति ॥ एवमपि चेच्चविशेषणदानेऽपि । गम्येति । बहुमीहि. ॥ श्रीकण्ठेति । शुद्धस्यैवमुदाहरणं सोपपाद-

१. 'भ्रान्तिमदलंकार.' इति भवेत्. २. 'निमिषंभवदेकस्य पतञ्जो दहनेकधा । उल्लेखनमनेकेन वर्णुकेन प्रपद्यते ॥' इत्युदाहरणे 'अनेकधा' इति विशेषणदानेऽतिव्याप्तिः स्यात्.

वर्णने—यत्तपोवनमिति मुनिभिरगृह्यत" इत्यादौ शुद्धः, "यमनगरमिति शत्रुभिः वज्रपञ्जरमिति शरणागतैः, इत्यादौ भ्रान्तिरूपकादिसंकीर्णः" इति स्वयमेवोक्तत्वादिहाप्यपह्नुत्या संकीर्ण उल्लेख इत्यस्य सुवचत्वात् ॥ यदि चैवंविधापह्नुतिवारणाय निषेधास्पृष्टत्वं विशेषणमुच्यते, तदा,

> 'कपाले मार्जारः पय इति कराँल्लेढि शशिन-
> स्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति ।
> रतान्ते तल्पस्था हरति वनिताप्यंशुकमिति
> प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥'

इति त्वदुदाहृतभ्रान्तावतिव्याप्तिः कथं नाम वार्येत, मार्जाराद्यनेकग्रहीतृकानेकधोल्लेखनस्य तत्रापि सत्त्वात् । स्वस्वमियाहारलिप्सारूपनिमित्तभेदाच्च । तस्मात्संकीर्णनिवारणाय यत्नोऽनर्थक एवेति ॥

इति चित्रमीमांसाखण्डने उल्लेखप्रकरणम् ।

---

अथापह्नुतिप्रकरणम् ।

यत्तु—अपह्नुतिप्रभृतावुक्तम्—

> 'त्वदालेख्ये कौतूहलतरलतन्वीविरचिते
> विधायैका चक्रं रचयति सुपर्णीसुतमपि ।

---

नमुकत्वान्यदाह हर्षचरिते । इत्यादौ 'यत्तपोवनम्' इत्यादि गद्ये । अगृह्यतेत्यस्य सर्वत्र संबन्धः । इच्छन्दार्थः श्रीकण्ठजनपद । शुद्ध इति । तत्र तपोवनादिभूमिनिष्ठत्वादिति भावः । यमनगरत्वादीनां ताद्रूप्यानुभवगोचरत्वादन्यत्र आह—भ्रान्तीति । यदि तेषामुपरञ्जकतामात्रेणान्वय, तदाह—रूपकेति । एवंविधेति । विलक्षणेत्यर्थ । त्वदुदेति । त्वया प्रथमं मुख्यत्वेनोदाहृतेत्यर्थः । तादृशभ्रान्तिविशेषस्यापि वारणायत्नकत्वात्, अन्यथा संकीर्ण उल्लेखमात्रमुदाहृतम् । तद्विविधविषयस्यैवाद्यासुदाहर्तुमौचित्यात् । अन्यथालंकारभेदो न स्यादिति भावः ॥ अनेकधेति । प्रकारान्तरैरित्यर्थः । उपसंहरति—तस्मादिति । स्पष्टलेखस्य इति । तत्रविशेषविभूतचित्र इत्यर्थः । नायक प्रति सखीवचनमिदं । एका तन्वी सखी । चक्रं सुदर्शनम् । सुपर्णीसुतं गरुडम् । अपि

अपि स्विद्यत्पाणिस्त्वरितमपमृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥'

इत्यादावपह्नुतिध्वनिरुदाहर्तव्यः । अत्र हि चक्रसुपर्णलेखनेन नायं साधारणः पुरुषः, किंतु पुण्डरीकाक्षः इति कयाचिद्व्यञ्जितम् । अन्यथा तु, तस्याप्येतादृशं न संभवतीत्याशये 'नायं पुण्डरीकाक्षः, अपि तु मन्मथः' इति तदुभयमपमृज्य पुष्पसायकमकरध्वजलेखनेन व्यञ्जितम्" इति । तदेतदापातरमणीयम् । यत्तावदुच्यते—'चक्रसुपर्णलेखनेन नायं साधारणः पुरुषः किंतु पुण्डरीकाक्षः—इति कयाचिद्व्यञ्जितम्' इति । तत्रापह्नुतेर्द्वौ भागौ—उपमेयनिषेधः उपमानारोपश्च इति । तयोस्तावदुपमानारोपभागः 'पुण्डरीकाक्षोऽयम्' इत्याकारश्चक्रसुपर्णलेखनेन व्यङ्क्तुं शक्यः, चक्रसुपर्णयोस्तत्संनन्धित्वात् । ननु—'नायं साधारणः पुरुषः' इत्युपमेयनिषेधभागोऽपि, व्यञ्जकस्यारोपमात्रव्यञ्जनेन चरितार्थतया सामर्थ्याभावात् । नाप्यनुभवसिद्धः सः, येन तद्व्यञ्जनायोपायो गवेष्येत । नापि गवेष्यमाणोऽपि तद्व्यञ्जनोपायः शब्दोऽर्थो वा उपलभ्यते, येना-

---

श्रम । क्वचित्तथैव पाठः । अथ मार्जनयोग्यत्वाय हेतुगर्भं विशेषणम्—स्विद्यत्पाणिरिति । अपरा तरुणी । तस्यापि पुण्डरीकाक्षस्यापि । इत्यादायेन तया लेखनेन । इति व्यञ्जितमित्यन्वयः । तदुभयं चक्रसुपर्णद्वयम् ॥ तत्रेति । उच्यत इति शेषः । एवमग्रेऽपि भागौ व्यङ्क्तुं शक्य इत्यनुषज्यते । व्यञ्जकेति । चक्रसुपर्णलेखनस्येत्यर्थः । ननु कथं तदनुभवोऽत आह—नापीति उच्यत

नुभवकलहः स्यात्। नच साधारणपुरुषमन्तरेण पुण्डरीकाक्षतादात्म्या रोपो दुर्घट इति सोऽपि व्यज्यत इति वाच्यम्, रूपकोच्छेदापत्तेः॥

इति चित्रमीमांसाखण्डनेऽपह्नुतिप्रकरणम्।

---

इति। प्रकृतपद्य इति शेषः। दुर्घट इति। तज्ज्ञानस्य तत्र प्रतिबन्धकत्वादिति भावः। सोऽपि निषेधभागोऽपि। अन्यथानुपपत्त्येति भावः॥

इति रसगङ्गाधरमर्मप्रकाशोद्धृतटिप्पण्यामपह्नुतिप्रकरणम्॥

समाप्तोऽयं ग्रन्थः।

---

१. एतत्प्रणेतुः पण्डितराजजगन्नाथस्य विषये यद्वक्तव्यं तत्सर्वं रसगङ्गाधरभूमिकायां महामहोपाध्यायपण्डितवरदुर्गाप्रसादैर्वर्णितमिति तत एवावसेयम्. एतद्ग्रन्थादर्शपुस्तकं तु जयपुरराजगुरुश्रीलक्ष्मीदत्तसूनुश्रीयुतश्रीदत्तशर्मभिः काव्यमालार्थं संवत् १७०९ (शिस्ताब्द १६५२) लिखितं १७ पत्रात्मकं दत्तमिति तेऽत्यन्तं धन्यवादार्हाः.

२. एतद्ग्रन्थप्रणेतुर्नागेशभट्टस्य विषयेऽपि वक्तव्यं रसगङ्गाधरभूमिकायामेव महामहोपाध्यायैर्वर्णितमिति तत एवावसेयम्. टिप्पण्यादर्शपुस्तकं तु नोपलब्धम्, किंतु मूलग्रन्थोपयोग्यंशोऽस्माभिरेव मैथिलवर्यश्रीयुतसुन्दरशर्मसाहाय्येनोद्धृत्य संकलितः.